त्वन्नित्यपत्नी सा'। किमर्थं तस्या अग्निपरीक्षा' इति राघवं प्राबोधयत्। ब्रह्मकृतरामब्रह्मत्वोपदेशे उपनिषच्छाया भूयसी दृश्यते। 'जगत्सर्वं शरीरं ते' इत्यत्रान्तर्यामिब्राह्मणानुसारः स्पष्टः। अन्तर्यामिब्राह्मणं शारीरकब्राह्मणमिति व्यवह्रियते श्रीसुरेश्वरकृतबृहदारण्यकवार्तिके। बार्हदारण्यके भाष्ये श्रीशङ्करभगवत्पादैः अन्तर्यामिब्राह्मणप्रतिपादितः विश्वान्तर्यामी 'नारायणाख्यः' इति भाषितम्। अत्र ब्रह्मवचने 'भवान्नारायणो देवः इति उपक्रमकृतप्रतिज्ञा समर्थ्यते बह्वीभिरुपपत्तिभिः।

'जगत्सर्वं शरीरं ते' इति अत्र रामस्य विश्वशरीरत्वोक्तिः तस्य नारायणत्वोपपादिका इति ब्रह्मण आशयः। सौबालान्तर्यामिब्राह्मणे प्रतिपर्यायं 'स ते आत्मा अन्तर्याम्यमृतो दिव्यो देव एको नारायणः' इति पठ्यते। 'भवान् नारायणो देवः' इत्यत्र तच्छ्रुतिमत्यभिज्ञापनं स्पष्टम्। सौबालान्तर्यामिब्राह्मणैकरस्येन रामायणोपबृंहणानुगुण्येन च श्रीशङ्करभगवत्पादैर्नारायणसमाख्या भाषितेव। शारीरकमीमांसा च स्वनाम्नैव शारीरकब्राह्मणप्रतिपादितविश्वशरीरत्वं शास्त्रप्रतिपाद्यब्रह्मणः प्रख्यापयति। इत्थं च रामस्यौपनिषदपुरुषत्वं शारीरकशास्त्रप्रतिपाद्यत्वं चात्र निर्णीय प्रोच्यते पृच्छते जिज्ञासवे रामाय। सर्वोपनिषद्गवां दोहेन गीतामृतदोग्धा भगवान् रामायणमपि दोग्धि स्वगीतामृतरूपेण। 'रुद्राणामष्टमो रुद्रः' 'त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः', 'प्रभवं निधनं वा ते न विदुः को भवानिति', 'त्वं धारयसि भूतानि वसुधां च सपर्वताम्', 'न तदस्ति त्वया विना' इत्याद्यत्रोक्तं भाव्यम्। कुरुवृद्धो भीष्मश्च देहवियोगकाले स्वसहस्रनामस्तवे इमं ब्रह्मस्तवमनुसरति। 'शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः' इत्यादिकं भाव्यम्।' 'तस्यैष एव शारीर आत्मा' इति तित्तिरिभिः विश्वशरीरपरमात्मनः आनन्दमयत्वं पठ्यते। जानात्येव रामं वाल्मीकिः। तस्य परब्रह्मत्वं गुरुमुखात् जिज्ञासते निगमसंमितमहाकाव्येतिहासप्रणयनारंभाय।

तेन कीर्तिताः दुर्लभाः बहुगुणाः दिव्यस्य परमपुरुषस्यैव भवेयुः । परब्रह्मैव रामत्वेनावतीर्ण इति गुरुमुखादधिजिगमिषति । स्वोद्दिष्टकाव्यनायकस्य मनुष्यस्य परब्रह्मत्वमपि स्याच्चेत् स्वकीयकाव्यस्य मोक्षशास्त्रत्वमपि सिद्ध्येदिति भावः । 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि' इति रामनामनिर्वचनं रामस्य 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' इत्युपनिषत्प्रतिपाद्यब्रह्मत्वं निर्णाययति । 'रामो रमयतां वरः' इति वचनं 'एष ह्येवानन्दयाति' इति श्रुतिमुपबृंहयतीव । 'अपि वृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः' इति रामविरहव्यसनकर्शितत्वं वर्णितं द्रुमादीनामपि । 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' । रामरसमेव पेपीयमाना मोदमाना आसन् वृक्षाः । तद्विरहे तद्रसाभावभयादतप्यन्त । ईदृशं रामब्रह्मत्वेनाविष्कृतवतां तेषां रामेण सह सनातनसान्तानिकलोकप्राप्तिर्न्याय्यैवेति रामायणस्य निपुणोपदेशः । 'रामभूतं जगदभूत् रामे राज्यं प्रशासति' इति सर्वेषां प्राणिनां राममयत्व-सम्पत्तिरुक्ता । राममयत्वं च ब्रह्ममयत्वम् । अत एवायोध्यकानां सर्वेषां निश्रेयसप्राप्तिरसिद्धवत् । इत्थं रामायणस्य रामब्रह्मविद्याशास्त्रत्वम् । अध्यात्मशास्त्रमिदं रामचरमवपुष्कम् । 'तपसा ब्रह्म विजिज्ञासस्व' इति ब्रह्म-जिज्ञासाश्रुतिं, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति ब्रह्मविविदिषाश्रुतिं च काव्योपक्रमे तपस्स्वाध्यायपदाभ्यां प्रत्यभिज्ञापयन् ऋषिरस्य रामायणस्य रामब्रह्मविद्यात्वं व्यञ्जयतीव । अस्य ब्रह्मजिज्ञासाकाव्यस्य स्वाध्येतॄणां ब्रह्ममयत्वसम्पादनेन नित्यलोकेषु ब्रह्मसायुज्यप्राप्तिफलकत्वमस्ति । तपश्शब्दः क्लेशभूयिष्ठनियम-व्रताद्यनुष्ठाने प्रसिद्धः । 'तपः कृच्छ्रादिकर्म च' इति, 'तपःक्लेशसहो दान्तः' इति चामरः । तपसः क्लिष्टत्वं प्रसिद्धम् । 'तपः क्व वत्से क्व च तावकं वपुः' इति गौरीमातुर्मेनाया निषेधगीः । एतत्काव्यनायकाः चक्रवर्तिपुत्राः चत्वारोऽपि यौवने केवलं तपस्विनोऽभवन् । 'यौवने विषयैषिणां वार्धके मुनिवृत्तीनाम्'

इत्युक्तविभागो नैतेषां तपःशीलानां दिव्यपुरुषाणाम् । 'गलितवयसा-मिक्ष्वाकूणामिदं हि कुलव्रतम्' इत्युक्तं वृद्धेक्ष्वाकुधृतमारण्यकं व्रतं बाल्य एव चिरमेभिर्महात्मभिर्धृतम् । 'विद्धि मां ऋषिभिस्तुल्यं केवलं धर्ममास्थितम्' इति रामोक्तं स्वस्य बहुर्षितुल्यत्वं तथ्यमेव । उपमातृनियोगं विनापि रामशेषत्वैकरतिर्लक्ष्मणः स्वयं यौवने तापसव्रतं परिजगृहे । भरतशत्रुघ्नौ राज्ये वसन्तावपि राज्यं पालयन्तावपि तीव्रं तापसव्रतमेवान्वतिष्ठताम् । 'तपस्वी नियताहारः शेते शीते महीतले', 'तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे' इति भरतस्य तपोनिष्ठा वर्णिता लक्ष्मणेन । सीता च यौवने भर्तारमनुवनं जगाम । अशोकवनिकायां तया चरितं तपः प्रसिद्धम् । सीतारामपुत्रौ वाल्मीकितपोवने जातौ तत्रैव महर्षिणा संवर्धितौ उपनयनादिभिः संस्कृतौ वेदान् रामायणं चाध्यापितौ महातपस्विनाविति रामेणाऽऽश्लाघ्येताम् । 'इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ' इति रामायणकथा-गानप्रारंभाव्यवहितपूर्वं रामवचनं भाव्यम् । वाल्मीकिनारदवत् रामायणस्य प्रथमाध्येतारौ प्रथमप्रयोक्तारौ बालौ महातपस्विनौ मुनी । रामायणगानस्य प्रथमश्रोतारः प्रथमाभिनन्दिनो महर्षयस्तपस्विनः । तपसा चेदं रामायणं निर्मितं कविना । 'उपस्पृश्योदकं सम्यक् मुनिः स्थित्वा कृताञ्जलिः । प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥', 'तत्सर्वं धर्मवीर्येण यथावत् संप्रपश्यसि ।', 'ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः' इति तपस्तपस्यन्नेव इदं काव्यं निबबन्ध कविः । इत्थमस्मिन् काव्ये तपस्सम्बन्धभूमा । काव्यवस्तुनि काव्यनिर्माणे काव्यनायकेषु काव्यप्रवर्तने च बहुधा तपस्संबन्ध-प्राचुर्यं व्यज्यते नः इति काव्योपक्रमणेन । 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धितपस्तद्धि तपः' इति श्रुतिस्मारणेन तपश्शब्दस्य प्रवचनार्थकत्वं द्योतितमिति स्थितम् । अल्पाच्तरत्वात् प्रवचनार्थकस्य तपश्शब्दस्य पूर्वनिपातः । अध्ययनप्रवचननिरताः गुरवः । यत्र न केवलं वेदाध्ययनं, किन्तु शतकोटि-

प्रविस्तरस्य ब्रह्मप्रवर्तितस्य देवलोके प्रचारितस्य रामायणस्याध्ययनमपि विवक्षितम्। 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्'। 'ब्रह्मलोकप्रसिद्धं शतकोटिप्रविस्तरं रामचरितं' इति श्रीमहेश्वरतीर्थः। 'ब्रह्मणा चोदितं तच्च शतकोटिप्रविस्तरम्। आहृत्य नारदेनैव वाल्मीकाय निवेदितम्।' इति मात्स्यवचनमुदाहृतं श्रीगोविन्दराजेन। देवलोकप्रचरितरामायणाध्ययननिरतत्वादस्य राममहिमतत्त्वदर्शित्वम्। तेन च वाल्मीकये तदुपदेष्टृत्वसामर्थ्यञ्च। 'महर्षे त्वं समर्थोसि ज्ञातुमेवंविधं नरम्' इति वक्ष्यते। 'अभयं सत्त्वसंशुद्धिः' इति गीताषोडशाध्यायारंभपठितगुणेषु 'स्वाध्यायस्तप आर्जवं' इति स्वाध्यायतपसी सहपठ्येते। तपस्स्वाध्याययोस्साहचर्यं श्रुतिस्मृतिप्रसिद्धम्। दैवसम्पन्निर्वर्तकधर्ममध्यपठिते ते। दैवसम्पदा ऋद्धिमन्तो गुरवः। 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति यज्ञदानतपसां ब्रह्मविद्याङ्गत्वं गीताप्रसिद्धं, यज्ञादिश्रुतिसूत्रप्रसिद्धं च। शमदमादीनि विद्यासाधनानि विद्यासहकार्यङ्गानि। 'शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदंगतया तेषामप्यवश्यानुष्ठेयत्वात्' इति व्याससूत्रम्। 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति श्रुतिः। निष्पन्नायां विद्यायां तेषामङ्गत्वमनभ्युपगच्छद्भिरपि तेषां विद्यानिष्ठलक्षणत्वेनावश्यादरणीयत्वमुच्यते। स्वाध्यायशब्देन श्रोत्रियत्वं, तपश्शब्देन ब्रह्मनिष्ठत्वं च ग्रहीतुं शक्यम्। तथा च 'श्रोत्रियं ब्रह्मनिष्ठं' इत्याचार्यलक्षणपूर्तिरुक्ता भवति। 'तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ। तपसा कल्मषं हन्ति विद्यया ज्ञानमश्नुते' इति मनुः। स्वाध्यायशब्देन विद्योच्यते। 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत्। स्वाध्याययोगसम्पत्त्या गमिष्यति परां गतिम्' इति स्मर्यते। ज्ञानमयं तपो योगः। नितरां रतो निरतः। तपस्स्वाध्याययोरत्यन्तं रतः। अनेनास्य काव्यस्य शान्तब्रह्मरसानुभावयितृत्वं व्यज्यते। 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते।

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते। मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते'। तपश्शब्देन त्रिविधमपि तपो विवक्षितम्। अनादिसिद्धान् तपोविभागानेव भगवान् गायति। 'उच्यते, उच्यते' इति पूर्वरुक्तमेव तेनावलम्ब्यते। 'वाङ्मयं तपः' इत्युक्ताऽनुद्वेगकरवाक्ये दृष्टान्तः उदाह्रियते श्रीशङ्करभाष्ये 'यथा शान्तो भव वत्स स्वाध्यायं चानुतिष्ठ तथा ते श्रेयो भविष्यति' इति। वेदैस्सम्मितस्य पुराणस्य रामायणस्याभ्यसनमपि वाङ्मयं तपो भवेत्। 'वेदस्साक्षाद्रामायणात्मना आसीत्' इति स्मर्यते।

तपःपूर्विका आदिसृष्टिरिति प्रसिद्धम्। 'स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत' इति जगत्सृष्टिः तपःपूर्विकेति श्राव्यते। रामायणरूपादिकाव्यसृष्टिरपि तपःपूर्विकेति व्यज्यते तपश्शब्दारम्भणेन। श्लोकस्य तपःपरिणत्या रामायणमवतीर्णम्॥

'न्यासमेषां तपसामतिरिक्तमाहुः' इति न्यासरूपशरणागतेः सर्वभयेभ्योऽभयदानरूपमहातत्त्वस्य प्रतिपादकं रामायणम्। सकृत्प्रपदनस्पृशामभयदाननित्यव्रतित्वं भगवतो विस्तरेणोपपाद्यते रामायणेन। तदपि व्यज्यते तपःपदस्यारम्भनिवेशनेन। सीतया तप्तस्य पातिव्रत्यतपसोऽत्र प्राधान्येन निरूपणमपि सूच्यते उपक्रमपठिततपःशब्देन। 'पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते' इत्यनसूयां प्रति सीतावचनं, 'पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो' इति मन्दोदरीविलापवचनं चेह भाव्यम्।

'तपस्स्वाध्यायनिरतं तपस्वी नारदं वाल्मीकिः' इति गुरुशिष्ययोः प्रथमश्लोके सहस्मरणमत्यन्तमुचितम्। 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्' इति महाभारतारम्भे गुरुशिष्यौ सह नमस्क्रियेते। गुरुशिष्योभयाधीनो विद्याप्रचारः। अत्र शिष्यभूतः श्लो गुरुर्भवेत्। गुरुशिष्यपरम्परयैव

विद्याप्रचारस्य शाश्वतिकत्वम् । 'देवर्षि, प्राह विप्रर्षि वीणापाणिः स्मयन्निव' इति भागवतारंभे उभयोः सदृत्वमनुभूतम् । 'सैषा भार्गवी वारुणीविद्या' इति तैत्तिरीये विद्या द्वयोरपि नामभ्यां संज्ञिता । तत्रापि भृगुरिति शिष्यनाम प्रथमम् । वरुण इति गुरुनाम चरमम् । 'पुत्रादिच्छेत्पराजयम्' । 'अत्र वाल्मीकिनारदयोः स्वरूपकथनेन शिष्याचार्याभ्यामेवंभवितव्यमिति द्योतनात् वाक्यगतवस्तुना वस्तुध्वनिः' इति गोविन्दराजेनोक्तं रम्यम् ॥

अत्र तपस्वीत्यात्मानं निर्दिशति कविः । अस्ति तत्र भूयः स्वारस्यम् । 'तपस्वी'ति स्वस्य शोच्यत्वरूपदैन्यं विवक्षितम् । 'तपस्वी तापसे शोच्ये' इति वैजयन्ती । 'सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयतु' इति यथा नारदो भगवन्तं सनत्कुमारं स्कन्ददेवं प्रपच्छ, तथा वाल्मीकि स्वस्य शोकदीनत्वं प्रकाशयन् स्वगुरुं नारदं पृच्छति । ब्रह्मज्ञानालाभात् अनुपरतशुक् । तज्ज्ञाने देदेनैव तस्याः शुचः शान्तिः । 'आत्मज्ञानाभिलाषादनुपरतशुचे नारदाय प्रयुक्ते प्राणे-सानत्कुमारे विरमति वचनम्' इति भूमाधिकरणसंग्रहश्लोक इह भाव्यः । 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' इति शारीरकसूत्रमपि भाव्यम् । ब्रह्मज्ञानाभिलाषायास्तीव्रत्वे तदलाभप्रयुक्तशोकोऽपि तीव्रः स्यात् । 'तपस्वी'त्यनेन इत्थमात्मदैन्यं, आत्मनः शुक् च व्यज्यत इति गोष्ठीपुरं श्रीसौम्यनारायणाचार्यपादाः । 'तपस्विन्'शब्देन भूमविद्यासमाधिर्व्यज्यते । इयं रामविद्या अपरा भूमविद्या । 'यत्र नान्यत्पश्यति नान्यद्विजानाति स भूमा' इति भूमविद्याफलम् । 'नैषा पश्यति राक्षस्यः नेमान्पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥' इति सीतानुभवो भूमविद्याप्रदर्शितानुभवः । 'राममूर्तं जगदभूत्' इति सर्वेषां रामतन्मयत्वमुक्तम् । सीताया रामानन्यनिष्ठा रामराज्ये सर्वेषां समानाऽभवत् ।

'भूमात्वेव सुखम्' । सुखभूमा रामः । सुखमयी रामचिन्ता । सुखमयो रामाश्रणानुभवः । 'तथापि शोचयात्मानमकृतार्थ इव प्रभो' इति

भागवतारंभे नारदः । व्यासस्य शोको भागवतावतारप्रयोजकोऽभूत् । रामायणं भागवतं च स्कन्दशिष्यनारदानुग्रहप्रवर्तितम् । कुमारर्षयः स्वदत्तशापेन नृसिंहरामकृष्णावतारप्रयोजकाः । एतत्काव्यद्वयमपि तच्छिष्यप्रवर्तितम् । तपस्वित्वं शिष्यलक्षणम् । 'कामाऽनशनमेव तपः' इति भामती । 'तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति श्रूयते । 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा' इति विद्यासाधनानि । 'शान्तो दान्तस्तितिक्षुः शरणमुपगतः शास्त्रविश्वासशाली शिष्यः प्राप्तः परीक्षां कृतविदभिमतं तत्त्वतः शिक्षणीयः ॥' इति सर्वतन्त्रस्वतन्त्रश्रीवेङ्कटनाथाः । तपस्वित्वस्य शिष्यलक्षणत्वात् शिष्यस्य स्वस्य शिष्याधिकारसम्पत्तिः कीर्तनीयैव । न तेनात्मश्लाघादोषसम्भवः । तदकीर्तनेऽनधिकारापत्तिः । ध्वनिमर्यादया शिष्यस्वरूपमत्र लोकायोपदिश्यते । कथमत्र स्वस्य तपस्वित्वापह्नवः शक्यः ।

'वाग्विदां वरम्' । न केवलं स्वाध्यायरूपवेदतदर्थमात्रवित्, किन्तु लोकचित्तरञ्जकवाग्विस्तुश्रेष्ठः । तथा च उत्कृष्टवाण्यनुग्राहकत्वसामर्थ्यं द्योत्यते । कविप्रथमपद्धतिरादिकाव्यं रामायणम् । परं कवीनामाधारमिदम् । अस्य प्रवर्तकगुरोर्वाग्विदां वरत्वमपेक्षितमेव । गुरुनिष्ठमिदम् । अज्ञानखण्डकश्च गुरुः । 'दो अवखण्डने' । नरसम्बन्धि अज्ञानम् नारं — ज्ञानं, तस्य दाता इत्यप्यर्थो विवक्षितः । 'गुशब्दस्त्वन्धकारे स्यात् रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥' इति निर्वचनश्लोकोक्तगुरुपूर्तिर्द्योत्यते । वीणापाणिर्मुनिः । 'पाठ्ये गेये च मधुरं तन्त्रीलयसमन्वितम् ॥' इति रामायणश्लोकवर्णनं भाव्यम् । नारदप्रवर्तितं रामायणं तथैव भवेत् । नारदप्रवर्तितस्यास्य गानकुशलाभ्यां कुशलवाभ्यां प्रचारणमुचितमेव । '*परिपप्रच्छ*' *कः कः इति बहुप्रश्नैः परितो विविधं पप्रच्छ* । '*वाल्मीकिः*' नाम्नैवास्य तपोनिष्ठत्वरूपतपस्वित्वं प्रदर्श्यते । अतस्तपोनिष्ठत्व,चितपस्वि-

विशेषणस्यानवसर इव । 'निश्चलतरतपोविशेषेणास्य वल्मीकवृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतसः पुत्रत्वं वल्मीकापत्यत्वं च संगच्छते' इति श्रीगोविन्दराजः । बहूनामहमहमिकास्य जनकत्वाभिमतौ । 'भार्गवेण तपस्विना' इत्युत्तरकाण्डान्तिमभागे । 'वेदः प्राचेतसादासीत्' इत्यस्य प्राचेतससंज्ञापि प्रसिद्धा । भूमिसुतासीताचरित्रत्वाद्रामायणस्य तत्कवेर्वसुधाश्रोत्रजत्वमप्युचितमेव । 'सीतेव देवि सहजेन कवीश्वरेण' इति सीतासहजत्वं गीयतेऽस्य । चित्रकूटे 'वाल्मीकिमभिवादयन्' इति वाल्मीकिशब्दमात्रेण निर्देशः कृतः ।

'मुनिपुङ्गवम्' अनेन निदिध्यासनकौशलमुच्यते । राममन्त्रजपनिष्ठोऽभूद्वाल्मीकिः । 'मन्त्रविदेवास्मि, नात्मवित्' इति नारदः सनत्कुमारं विज्ञापयामास । राममन्त्रसततजपा वाल्मीकिः गुरुमुखात् रामगुणचरित्रमहिमादिविज्ञानेन रामध्याननिष्ठाभाग्यमभिलषति ।

---

(मू.) कोऽन्वस्मिन्सांप्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ 2

चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ 3

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ 4

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ 5

'अथ चतुर्विंशत्यक्षरगायत्र्याम्न्यपरब्रह्मविद्याविलासभूतं रामायणं चतुर्विंशतिसहस्रश्लोकैश्चकार' इति वदन्तौ श्रीतीर्थतिलकौ रामायणस्य परब्रह्म-

विद्यात्वं स्पष्टीकुरुतः । 'कः कः' इति दशकृत्वः पठ्यते प्रष्ट्रा जिज्ञासुना । 'कस्य बिभ्यति देवाश्च' इति चतुर्थश्लोके पठ्यते । 'कः कः' इत्यादिबहुप्रश्नपदावृत्त्या बुभुत्सायास्तीव्रत्वं द्योत्यते । 'एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे' इति स्पष्टं स्वजिज्ञासां कीर्तयित्वा स्वकौतूहलस्य काष्ठागतत्वमावेदयति । 'कःकः' इति भूयः पृच्छा 'परं कौतूहलं हि मे' इति कौतूहलातिशयोक्तिश्च बुभुत्सितविषयसाश्चर्यरसत्वं व्यञ्जयतः । 'आश्चर्यो वक्ता आश्चर्यः श्रोता आश्चर्यो लब्धा कुशलानुशिष्टः' इति कठवल्ली । "आश्चर्यवत्पश्यति कश्चिदेनं आश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति" इति भगवद्वाक्यं जीवात्मविषयेऽपि । 'आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम्' इत्याद्यत्रोक्तं भाव्यम् । 'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति' इति केनोपनिषदारंभ इवात्रापि 'कःकः' इति प्रश्नवाचकशब्दबहुत्वम् । 'कःकः' इत्यस्मिन्काव्ये वाल्मीकेर्वाग्द्वारं भवति । 'कः' इति भगवन्नाम । 'एको नैकः सः वः कः किं यत्तत्पदमनुत्तमम्' इति विष्णुसहस्रनामसु भगवन्नामानि पठितानि । 'कः' इति सर्वनामशब्दो भगवन्नाम । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीता । 'तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥' इति गीताश्लोकस्य भाष्ये "ताः—ब्रह्मप्राप्त्युपायतया ब्रह्मवाचिना तदिति पदेन निर्देश्याः । स वः कः किं यत्तत्पदमनुत्तमं इति तच्छब्दो हि ब्रह्मवाचीप्रसिद्धः ।" इति भगवद्रामानुजाः । 'भगवन्नामसहस्रे 'यानि नामानि गौणानि विख्यातानि महात्मनः' इति प्रक्रमात्, 'नाम्नां सहस्र'मिति निगमनात् यत्तदादिशब्दानां सर्वनामतया व्यापिनामपि विशेषतः साक्षात्परब्रह्मनामत्वं सिद्धमिति भावः' इति तत्राप्यष्टीका । 'तमिति ब्रह्मणिर्देशः' इति श्रीशङ्करभाष्यम् । सर्वनामशब्दानां ब्रह्मणि स्वारस्यं भूयो भणिता श्रीशङ्कर-

भगवत्पादैः । इत्थं 'कः कः' इति दशकृत्वः भगवद्वाचक शब्द पठनेन कवि प्रथम प्रद्धति भूत काव्यारंभे मंगलमूयस्त्वं सम्पाद्यते । भगवदवतार-संख्या ध्वाद्रियते कः पदावृत्तौ अवतार विशेषवर्णक काव्यारंभे । "बहवो दुर्लभाश्चैव येत्वया कीर्तिता गुणाः" इति शिष्यकीर्तित बहुदुर्लभोत्तम गुणानामेकाधिकरणत्वमेव प्रष्टुबुद्धिस्थम् । यद्यपि प्रश्नानां बहुत्वमापाततः प्रतीयेत, तथापि आदरातिशय एव प्रश्नवीप्सायां कारणम् । न पिपृच्छिषित गुणाधिकरणव्यक्तिपृथक्त्वम् । 'महर्षे त्वं समर्थोसि ज्ञातुमेवं विधं नरम्' इति शिष्यवचनेनेदं स्पष्टीकृतम् । पृष्टसर्वगुणविशिष्ट नरः कः इति बुभुत्सा स्पष्टीकृता । "एतदिच्छाम्यहं श्रोतु" मिति अत्रैकवचनेनापि प्रश्नस्यैकत्वं व्यक्तीकृतम् । "एतद्दिव्यपुरुषगुण जातं कस्यास्तीति श्रोतु-महमिच्छामि" इति तिलकः । केनोपनिषत्प्रश्नानामपि एकाधिकरणत्वमेव प्रष्टभिमेतम् । केनोपनिषत्प्रश्नेषु केनेति प्रश्नपदे एव उत्तरमपिगर्भितम् । कं—आनन्दः, 'आनन्दो ब्रह्म' । 'कं' इत्युपनिषत्प्रसिद्धं ब्रह्मनाम । कं सुखम् । 'कं ब्रह्म खं ब्रह्म' । आनन्देन ब्रह्मणा इषितं पतति प्रेषितं मनः । "कोह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' इत्यानन्दवल्ल्या इदं प्रसिद्धत्वेन श्राव्यते । तथात्रापि 'कः कः' इति प्रश्नः 'कः कः' इत्येवोत्तरयितुं शक्यः । 'भगवान्, भगवान्' इत्युत्तरमप्य-भ्यस्तं भवति सहस्रनामपठित सर्वनाममूतकःपदैरेव । 'रामो रामो राम इति जनानाम भवन्कथाः' इति रामे अभिषिक्ते रामनाम सततं सानन्दं सर्वे जनाः तन्मया अकीर्तयन् इति गीयते युद्धकाण्डान्ते । 'सततं कीर्तयन्तो माम्' । उपक्रमेप्यत्र भगवन्नाम पुनः पुनः कीर्त्यते । दुर्लभा बहवः तद्गुणाश्च कीर्त्यन्ते । पट्टाभिषेकानन्तरं तत्सन्निकृष्टे काले इमा अनुयोगा भवन्ति । 'रामो नाम जनैः श्रुतः' इति सार्व जनीन प्रसिद्धिं प्रतिवचनोपक्रम एव वदन् गुरुः स्वसंक्षेपे राम नाम पंच चत्वारिंशद्वारं कीर्तयति । 'नु' इति

वितर्कद्योतक निपातेन राममीमांसाप्रारंभोद्योत्यते । 'अस्मिन् लोके सांप्रतं इति प्रश्नस्य समान काल समान लोकवर्ति पुरुष विषयत्वम् । अस्मिन् लोके को गुणवान्' इति प्रश्नारंभः । सर्वोत्तम गुण विशिष्टः पुरुषोत्तमः कः इति प्रश्नः । सर्वाति शायि गुण विशिष्ट पुरुष विशेषः पृच्छ्यते । 'गुणवान्' इति मतुपा गुणानां प्रशस्तत्वं, भूमा, नित्ययोगश्च विवक्ष्यन्ते । सर्वमंगलगुण भूमा तत्सतत सम्पन्नः कः इति प्रश्नहृदयम् । 'सच सर्व-गुणोपेतः कौसल्यानन्दवर्धनः','तमेवं गुण सम्पन्नं रामं','ज्येष्ठं श्रेष्ठ गुणैर्युक्तं इत्यादिकं प्रतिवचनं शिष्य बुभुत्सानुसारि । 'बहवो दुर्लभाश्चैव ये त्वया कीर्तिताः गुणाः । मुने वक्ष्याम्यहं बुद्ध्वातैर्युक्तः श्रूयतां नरः ॥'' इति गुरुप्रतिवचन प्रथम वाक्येनैव दुर्लभ बहुगुण विशिष्ट पुरुष विशेषः पृष्ट इति स्पष्टीक्रियते । 'सर्वभूतेषु को हितः' इति कीर्तितं सर्वभूत सुहृत्त्वं, 'भोक्तारं यज्ञतपसां सर्वलोक महेश्वरम् । सुहृदं सर्वभूतानां' ज्ञात्वामां शान्तिमृच्छति ॥'' इत्युक्तसर्वलोकमहेश्वरस्यैव वस्तुतः सम्भवेत् । 'कश्चवीर्यवान्' इति कीर्तितं सर्वाति शयित वीर्यवत्त्वं परम पुरुषस्यैव संभवेत् । तादृशं वीर्यं भगवदसाधारणषड्गुणेष्वेकम् । "तवानन्त गुणस्यापि षडेव प्रथमे गुणाः" इति स्मर्यते । गीता भाष्य भूमिकायाञ्च श्रीशंकर भगवत्पादाः, "स च भगवान् ज्ञानैश्वर्य शक्तिबलवीर्यतेजोभिः सदा सम्पन्नः स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वन् लक्ष्यते । अधर्मेणाभिभूयमाने धर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुः भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवकयां वसुदे-वादंशेन किल संबभूव" इत्यमाषिषत । कृष्णविषये भाषितं तद्राम विषयेपि समानम् । "वीर्यवान्" इत्यादिभिः लोकातिशायिषाड्गुण्य विशिष्टः कः इति पृष्टं भवति । वेदवेद्यः परः पुमानेव किं दशरथ,त्मजो जात इति वितर्केण जिज्ञास्यते त्रिलोकज्ञ गुरुमुखात । "वेदवेद्येपरे पुंसि जाते

दशरथात्मजे । वेदः प्राचेतसासीत्साक्षाद्रामायणात्मना ॥" मोक्षप्रदे वेदवेद्ये परे पुंसि जाते, परमपुरुष विषय श्रौतब्रह्मविद्यापि रामायण कृति रूपेण प्राचेतसादवतरतीति प्राचेतसस्य वेदसंमित शास्त्र प्रणयन प्रवर्तनादि साम्यमस्ति । आसन्नेच तद्भाग्यलाभे लोकोत्तर सर्वातिशायि समस्त कल्याण गुण सम्पन्नो मूलोकवर्ती पुरुष एव किं मोक्षप्रदः परः पुमान् इत्यादिकं जिज्ञास्यते । एतैस्सर्वोत्तमगुणैः पूर्णः कश्चित् मनुष्यलोकवर्ती पुरुषश्रेष्ठो न परमपुरुषादन्यो भवेत् । वेदवेद्य परम पुरुषस्य ये गुणाः श्रूयन्ते, तैः पूर्णो रामः । किं रामः स एव परमः पुमान् इति जिज्ञासोर्विचि कित्सा । 'महर्षे त्वं समर्थोसि ज्ञातुमेवं विधं नरम्' इति वाल्मीकि प्रश्नवाक्य निगमनेन अतीन्द्रिय दर्शनवत एव गुरोः तत्प्रश्नप्रतिवचन सामर्थ्य संभव इति स्पष्टमवगमितम् । नरमात्रस्य तद्गुणानां वा नातीन्द्रियत्वम् । राम तद्गुणानुभवः सर्वजन प्रसिद्धः । परंतु रामस्य परम पुरुषत्वमतीन्द्रियम् । महर्षीणामेव तत्प्रत्यक्षीकरण सामर्थ्यम् । "अजायमानो बहुधा विजायते । तस्यधीराः परिजानन्तियोनिम्" "युवा सुवासाः परिवीत आगात् । सउ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाधियामनसा देवयन्तः" इति भगवदव तार विषय श्रुत्युक्तधीरत्वमिति भावः । धीरो धीशाली । "धीरोमनीषिज्ञः प्राज्ञः । "महर्षे यतः प्रत्यक्षीकृताशेषार्थस्त्वं उक्तगुणवन्तं नरं दिव्यपुरुषं ज्ञातुं समर्थोसि, सर्वलोकप्रसिद्ध सामर्थ्योसि, तस्मात् त्वत्त एव श्रोतुमिच्छामि" इति तिलकः। नर शब्दः परमात्मनोपि वाचकः । नरति–सद्गतिं प्रापयति इति नरः परमात्मा । "नरतीतिनरः प्रोक्तः परमात्मा सनातनः इति भारतवचनमुदाहृतं तीर्थगोविन्दराजाभ्याम् । "तैर्युक्तः श्रूयतां नरः" इति प्रतिवचनोपक्रमस्य नरशब्दस्यार्थद्वयमपि ग्राह्यम् । परमात्मभूतोनरः श्रूयतामिति गुरुहृदयम् । नारदीय संक्षेपेणद्योतितं रामस्य परब्रह्मावताररूपत्वं ब्रह्मणानु-

गृहीतेन दिव्य चक्षुषा साक्षात्करिष्यते वाल्मीकिना । ततश्च "स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अभितोमानुषे लोके जज्ञे विष्णुस्सनातनः ॥" इत्यादिकं गास्यते । "समस्तकल्याण गुणात्मकोसौ स्वशक्तिलेशोद्धृत भूतवर्गः" इति भगवतः समस्त कल्याणगुण सम्पन्नत्वमुक्तं पराशरेण । 'गुणवान्' "गुणशब्दोऽत्र न गुणसामान्यमात्रार्थकः, गुण विशेषोऽत्रविवक्षितः । गुण्यते इति गुणः, अभ्यसनीयः अनुकूलतमत्वेन शीलनीय इत्यर्थः । ईदृशत्वं च सौशील्यस्य गुणान्तरेभ्यस्समधिकम् । इदं च महतोमन्दैस्सह नीरन्ध्र संश्लेष स्वभावत्वम् । तदेतत् गुह शबरी गोपालादि वृत्तान्तेषु प्रसिद्धम्" इति, "वशी वदान्यो गुणवान् ऋजुः शुचिः मृदुर्दयालुर्मधुरः स्थिरः समः ।" इति यामुनाचार्यस्तोत्ररत्नश्लोकभाष्ये भाषितं श्रीवेंकटनाथैः । अत्र "यद्वा गुण्यते आवर्त्यते पुनः पुनराश्रितैरनुसन्धीयते इति गुणः सौशील्यम् । "गुणस्त्वावृत्ति शब्दादिज्येन्द्रियामुख्यतन्तुषु" इति विश्वः । सुशीलं हि नाम महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः । तस्याधिक्यं सौशील्यम् । तद्वान् । सौशील्ये गुण शब्दोऽभियुक्तैः प्रयुक्तः "वशीवदान्यो गुणवान् ऋजुः शुचिः" इति । कोवा सौशील्यवानित्यर्थः । इति श्रीगोविन्दराजव्याख्यारस्या । रामस्य सौशील्यं प्रसिद्धम् । 'परत्वस्य सौलभ्यमाकल्पमाहुः' । सर्वस्मात्परस्येश्वरस्य सौशील्यगुणो जनताचित्तरञ्जकतमः । 'अपिदाशकितवादित्वमधीयत एके" इति सूत्रयन् बादरायणः, निरतिशय बृहतो ब्रह्मणो निकृष्टवस्तु सामानाधिकरण्योक्तौ विस्मयं व्यञ्जयति । 'निषादानां नेताकपि कुलपतिः कापि शबरी कुचेलः कुब्जासा व्रज युवतयो माल्यकृदिति । अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैस्स्रोतोभिः प्रसममनुकम्पे समयसि ॥" इति भगवतः सौशील्यरूपदया गुणानुभवश्लोऽकोत्र भाव्यः । सौशील्य गुणरसाकृष्टः "कः कः" इति पुनः पुनरावर्तयतीव

गुणयतीव । परमपुमानेव किं अस्मिन् मानुषे लोके नरो बभूव इति विस्मयरसाविष्कारः । रामावतारे परत्वं रामेणापि विस्मृतप्रायम् । रामत्वमेवाभिमन्यते तेन । अतोऽत्र रामकथोपोद्घाते सौशील्यस्य प्रथम पठनमुचितमेव । "निषादराज सौहृद सूचित सौशील्य सागर" इति रघुवीरगद्योक्तमिह मान्यम् । सौशील्यसागरत्वं गुणवानिति शब्देन विवक्षितम् ।

'कश्चवीर्यवान्' को गुणवान् वीर्यवांश्च । चकारेण पृथ्गुणानामैकाधिकरण्यं स्पष्टीक्रियते । 'वीर्यवा' नित्यत्रापि मतुपा वीर्यस्य काष्ठा अभिप्रेयते । 'नियतात्मा महावीर्य' इति प्रतिवचनारंभे महावीर्यशब्देन वीर्यवानित्यत्र मतुबर्थः प्रकाश्यते । 'इक्ष्वाकुवंशप्रभवः' इति मनुष्यत्वेनावतरणरूप सौलभ्यं प्रतिवचनोपक्रम एव व्यज्यते । "रामोनामजनैः श्रुतः" इत्यनेनापि श्रुतशब्दस्यावधृतत्वार्थकत्वमाश्रित्य रामस्य "रामोरमयतां वरः" इति निर्वचन सिद्धरमयितृत्वोत्कर्षः सर्वैरपि जनैस्साक्षादनुभूत इति व्यञ्जनेन रामस्य सौशील्यं प्रकाश्यते गुरुणा। वीर्यवा नित्यत्र वीर्यशब्दः इतर भगवद्गुण पञ्चकोपलक्षकः । "वीर्यवान् न च वीर्येण महता स्वेन विस्मितः" इत्ययोध्या काण्डारंभश्लोकेनापि वीयवानित्यत्र निरतिशयमहत्त्वं मतुबर्थ इति प्रकाश्यते । अस्य वीर्यस्य निरतिशयमहत्वात् अयं महावीर इति भण्यते कविभिः । 'महावीरचरित्रं' इति महावीरसंज्ञा रामे पठिता भवभूतिना । 'महावीर चरित्रं' इति श्रीवेंकटनाथीयरघुवीरगद्यस्य संज्ञा । "जय जय महावीर" इति तद्गद्यारंभः । 'रामः शस्त्रभृतांवरः' इति कृष्णेन रामस्य सर्वोत्तमवीरत्वं परिगण्यते । "युद्धकुशलानां मध्ये रामो दाशरथिरखिलराक्षसकुलक्षयकरः परमवीरोऽहमस्मि" इति तत्र मधुसूदनसरस्वती परमवीरत्वं वक्ति । "दिष्ट्या कृतमिदं कर्म त्वया शस्त्रभृतां वर" इति भगवता महादेवेन

कृतमभिनन्दनं आदिकाव्यनिबद्धं स्मृतमिव गीतागायकेन भगवता। रामायणगायककुशीलवयोरिव गीतागायकस्य गोपालस्य वाचोविधेयं रामायणम्। "त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे" इति राम-राम संवादे रामो जामदग्न्यः। 'वीर्यवान्,' "सत्स्वपि विकारहेतुषु अविकृतत्वं वीर्यं" इति श्रीगोविन्दराजः। "येन स्वयमक्षतस्सन् परान् जयति तद्वीर्यम्" इति तिलकः। सर्वथा स्वस्याविक्रियमाणत्वम्। "नियतात्मा महावीर्यः" इति प्रतिवचने पदद्वयसमभिव्याहारेणेदं सूच्यत इव।

'धर्मज्ञश्च' "रामो विग्रहवान् धर्मः।" इति मारीचः स्तौति रामं रावणसन्निधौ। "श्रुतिः स्मृतिर्ममैवाज्ञा" इति भगवदाज्ञाः श्रुतिस्मृति विहितधर्माः। "चोदनालक्षणार्थो धर्मः"। कस्य चोदना? अस्यैव। नूनं स्वाज्ञां स्वयंवेत्ति, यद्यपि धर्मस्य तत्त्वं निहितं गुहायाम्। धर्मं निःसंशयं जानाति, अनुतिष्ठति च। स्वाचरणेन धर्मानुष्ठापनं प्रयोजनमवतारस्य। चशब्दात् अनुष्ठापनंच समुच्चीयत इव।

'कृतज्ञश्च' विष्युलंघने दण्डं पातयेदितिशंकायां, "कथंचिदुपकारेण कृतेनैकेन तुष्यति। न स्मरत्यपकाराणां शतमप्यात्मवत्तया॥" इति कृतज्ञत्वमनुपदमेव निर्दिश्यते भयशमनाय।

सत्यवाक्यः—अयं रामगुणः प्रसिद्धः। 'सत्येन लोकान् जयति दीनान् दानेन राघवः'। "चतुर्दशसु वर्षेषु गतेषु नरसत्तम। पुनर्द्रक्ष्यसि मां प्राप्तं सन्तापोऽयं विमुच्यताम्"॥ "नवपंचचवर्षाणि वनवासे विहृत्य ते। पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप॥" इति रामस्य वाक्यं सत्यापितं रामप्रियेण भगवता महादेवेन दशरथं स्वर्गादानाय्य रामस्य तत्पादवन्दनं घटयता।

दृढव्रतः— प्रथमतो वनवासव्रतसंकल्पः स्वप्रियतमभरतयाञ्चयापि न विचालयितुमपार्यत । "शिरसा याचतस्तस्य वचनं न कृतं मया" इति शोकेन भृशमतप्यत । अस्य शरणागतरक्षणव्रतमसाधारणम् । "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति तद्वाक्यम् । 'सकृत्प्रपदनस्पृशामभयदान नित्यव्रती" इत्येतद्व्रतानुवादः । सर्वलोकशरण्यस्येश्वरस्य करुणासागरस्य व्रतमिदम् ।

चारित्रेण च कोयुक्तः—राम चारित्रं सुप्रसिद्धम् । रामचरित्रमेव लोके चारित्रम् । चारित्रलक्षणं रामचरित्रात् ज्ञेयम् ।

सर्वभूतेषु को हितः—अयं रामगुणः हृतबान्धवाभिः क्रन्दन्तीभी राक्षसीभिरपि कीर्त्यते । युद्धकाण्डपञ्चनवतितमसर्गे "विधवाहतपुत्राश्च क्रोशन्त्यो हतबान्धवाः । राक्षस्यः सहसंगम्य दुःखार्ताः पर्यदेवयन्" इति वर्णितराक्षसीसमूहं परिदेवनोपक्रमे "कथं शूर्पणखा वृद्धा कराला निर्णतोदरी । आससाद वने रामं कन्दर्पमिवरूपिणम् ।.. सुकुमारं महासत्त्वं सर्वभूतहितेरतम्" ॥ इति तासां वाक्यम् । रामे सर्वेषां पुंसां रतिः । रमस्य सर्वभूतहितेरतिः । सर्वभूतहितत्वमीश्वरलक्षणम् । भूतहितायैवेश्वरप्रवृत्तिस्सर्वापि । 'प्रजानां च हिते रतः' इति प्रतिवचनम् ।

विद्वान् कः — 'यः सर्वज्ञः सर्ववित्', 'वेदवेदांगतत्त्वज्ञः', सर्व शास्त्रार्थतत्त्वज्ञः', स्मृतिमान् प्रतिमानवान्" इत्यादिकं प्रतिवचनं भाव्यम् ।

कः समर्थश्च—" समर्थः—अनन्यनिर्वाह्यकार्यनिर्वहणशक्तः " इति तिलकः । 'सर्वज्ञः सर्वशक्तश्चकः' इति प्रष्टरभिप्रायः ॥

कश्चैकप्रियदर्शनः—सर्वदा सर्वेषां प्रियदर्शनः । "सोमवत्प्रिय-दर्शनः" इति प्रतिवचनम् । चन्द्रो जगदाह्लादकरः । आह्लादकत्वमेव तस्य स्वरूपम् । "अतीव प्रियदर्शनम्," "पुंसां दृष्टिचित्तापहारिणम्" इति विग्रह सौन्दर्यम् । रामशरेणाभिहतो वाली स्वमारकस्य रामस्य प्रियदर्शन-त्वरसे मग्नोऽभूत् । "त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः" इति तदुपालम्भवचने प्रथमवाक्यम् । "तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्मपुच्छं प्रतिष्ठा" इत्युक्तानन्द-मय परमात्मनः कार्त्स्न्येन प्रियत्वमानन्दत्वञ्च । सर्वाङ्गसुन्दरीतिवत् पर-ब्रह्मणि सर्वांशैरपि आनन्दमयत्वानुभवः आनन्दवल्लीश्रुतेः ।" कश्चैकप्रिय-दर्शनः' इति विग्रहसौन्दर्यं विषयत्वं प्रश्नस्य । तत्सौन्दर्यरसानुभवरसमग्नो गुरुः "विपुलांसो महाबाहुः" इत्यारभ्य प्रतिवदति तद्विषये ।

"आत्मवान् को जितक्रोधः"—आत्मवान्—अजहत्स्वस्वभावः । आत्मा-स्वभावः । स्वभावश्च "समोहं सर्वभूतेषु नमेद्वेष्योस्ति कश्चन" इत्युक्तं समत्वम् । अत एव जितक्रोधः । न क्रोधस्य वशः । किन्तु क्रोधस्तस्य वशे । 'क्रोधमाहारयत्तीव्रं' इति क्रोधापेक्षासमये क्रोधमाहारयेत् । तीव्रोपि कोपः आहार्य एव । समुद्रराज विषये उत्थितस्तीव्रतमः कोपः उत्तरक्षण एव शशाम प्रपदनेन । इदं चास्मदर्शित, "पारावारपयोविशोषणकलापारीणकालानलज्वालाजालविहारहारिविशिखव्यापार-घोरक्रमः । सर्वावस्थ सकृत्प्रपन्नजनता संरक्षणैकव्रती धर्मो विग्रहवान धर्मविरति धन्वी स तन्वीत नः" इति राम विषयश्लोके दशावतार स्तोत्रे वेंकटनाथीये।

द्युतिमान्—दीप्तकान्तिमान् । "शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा" इति गीतं भाव्यम् । मरुकान्तारं स्वनीलकान्त्या आप्याययन् अम्बुवाहमयमिव चकार । "अटवीसम्पदमम्बुवाहयन्ती" इति गोपाल-

कविंशत्यां गोपालवर्णनं भाव्यम् ।

कोऽनसूयकः—'को गुणवान्' इति प्रथमः प्रश्नः । अत्रान्ते 'कोऽनसूयकः' इति पृच्छयते । असूयाराहित्यं दुर्लभतमम् । गुणेष्वपि दोषारोपः असूया । गुणवतामपि असूयाराहित्यं दुर्लभम् । अयं तु परदोषानपि करुणया वात्सल्येन च दोषत्वेन न परिगणयति । "यदि वा रावणः स्वयम्" इति अस्य प्रकृत्या कल्याणबुद्धिः । कृतमपकारशतमपि न स्मरति । अणुमपि गुणं महामेरूकरोति । पर्वताकारमपि दोषं परमाणूकरोति । "लीलानिर्जितषण्मुखात् भगवतः श्री जामदग्न्यादृते निर्विघ्नप्रतिपन्नशत्रुविजयो वीरस्तु कस्तादृशः" इति महावीरचरित्रे रावणस्य वीर्यं श्लाघते रामः ।

संयुगे जातरोषस्य कस्य देवाश्च बिभ्यति इति प्रश्नः । 'को वीर्यवा'निति द्वितीयप्रश्नः । अत्रान्ते तस्य वीर्यस्य अनुकूलानामपि भयावहत्वमुत्प्रेक्ष्यते । नृसिंहस्य देवादीनामपि भीषणत्वं प्रसिद्धम् । "सा नोपेयाय शंकिता" इति लक्ष्मीदेव्यपि बिभायेति वर्णितं शुकेन । कतिपयदिवसेभ्यः पूर्वमेवासदृशं घोरं रामरावणयुद्धं वृत्तम् । अचिरवृत्तं तत्स्मृत्वा इत्थं प्रश्नमुपसंहरति ।

'तपस्वी' इति प्रथमश्लोके स्वस्य तपस्वित्ववर्णनेन दैन्य-शुक्, श्रवण-कौतूहलं आर्तिः, इत्यादीनि इङ्गितैः सूचितानीति द्योतितम् । बुभुत्सितज्ञाने स्वस्य त्वरायाः काष्ठागतत्वं प्रश्नवीप्सयापि द्योतितम् । एतदहं श्रोतुमिच्छामि । मम शुश्रूषा अतीव तीव्रा । त्वं महर्षिः । ऋषीणां परमः । सर्वं तवापरोक्षम् । मद्बुभुत्सितमेवंविधं नरं ज्ञातुं तवसामर्थ्यमस्ति । नाहं वेद्मि त्वद्बुभुत्सितं पुरुषमिति त्वया वक्तुं न शक्यम् । समर्थस्त्वम् । वेत्सि त्वम् ।

कारुणिकश्च त्वम् । करुणामया: महर्षयः । अहं तव भ्रातुः पुत्रः । मम पितेव त्वम् । अहं सद्यो ज्ञातुमिच्छामि, क्षणमात्रविलम्बाऽसहिष्णुः । सर्वोत्तमनायकविषयकं काव्यं निबन्धुमहं तीव्रकामः । "नासंवत्सरवासिने प्रब्रूयात्" इति नियमो न पुत्रविषये आदर्तव्यः । 'अहं' इति स्वस्य नारद भ्रातृ-भृगुपुत्रत्वरूपो विशेषो विवक्ष्यते । गुरुरपि 'वक्ष्याम्यहं' इति प्रतिवदन् 'अहं' इति स्वस्य भ्रातृपितृत्वरूपातिशयमपि विवक्षति ॥

॥ अथ नारदसंक्षेपावतरणिका ॥

(मू) श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ 6

रागमयं, उत्कण्ठामयं मधुरं मधुराक्षरं कोकिलकूजितमिव वाल्मीकेर्वचो बहुमनुते गुरुः । 'श्रुत्वा चैतत् प्रहृष्टः', 'संभ्रमे मधुरं वाक्यम्" इतिवत् मधुरमधुरशिष्यप्रश्नश्रवणमात्रेणानन्दितो भवति राममक्तिमयो गुरुः । "इति संप्रश्नसंहृष्टः विप्राणां रौमहर्षणिः" इति भागवतारंभे शौनकादिविप्रपृष्टस्य सूतस्य महर्षः प्रदर्शितः । "इत्थं स्म पृष्टः स च बादरायणिः संस्मारितानन्तहृताखिलेन्द्रियः । कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम" इति भागवते, परीक्षित्प्रश्नेन संस्मारितानन्त भगवद्गुणापहृतमनाः तद्गुणानन्दानुभवमग्नः कृच्छ्रात् शनैः लब्धबहिर्दृशिः पुनः भागवतप्रवचनमारेभे शुकः इति वर्णितम् । तद्वदत्रापि उत्कण्ठामय्या शिष्यमधुरवाचा संस्मारितभगवद्गुणरसमग्नो गुरुः आनन्दपारवश्येन सद्यः क्षिप्रमुपदेशवाक्यानि मारब्धुं न शक्नोतीव । 'श्रूयता' मिति पदमात्रमुच्चारयति प्रथमम् । अनन्तरं विलम्बमेव पश्यामः तद्वचःप्रसरे । "प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः" इत्युद्धवविषये उक्तमिह भाव्यम् ।

"आमन्त्रणसमाजने । आप्रच्छन्नमथाम्नायः सम्प्रदायः" इत्यमरः । "आनन्दनसमाजने' इत्यपि पाठः । 'आमन्त्रण' मिति क्वचित्पाठः । आप्रच्छन्नमिति त्रीणि स्वागतसंप्रश्नादिना विहितस्यानन्दस्य ।" इत्यमर-सुधा व्याख्या । अत्रामन्त्रणशब्दप्रयोगस्यौचित्यं रस्यम् । अमरसिंहोऽपि इमं रामायणश्लोकं सस्मारेव । अत्र आमन्त्र्य सम्प्रदायोपदेशः प्रारभ्यते । 'प्रहृष्टः' इति हर्षाधिक्येन वाक्योच्चारणस्य मध्ये विलम्बितत्वं कथ्यते । प्रोपसर्गेण हर्षस्योद्रेकत्वं सूच्यते । हर्षाधिक्येन किञ्चिदुपरुद्धेव वाक् । 'वाक्यमब्रवीत्' इत्यनेन पूर्वं श्रूयतामिति पदमात्रमुच्चारयामास, न वाक्यमिति व्यज्यते । श्रूयतामिति प्रथमप्रयुक्तं पदं पुनरप्यभ्यस्यते 'श्रूयतां नरः' इति । "मुने वक्ष्याम्यहं बुद्ध्वा" इति वाक्ये 'बुद्ध्वा' इत्युक्त्या आनन्द संप्लवममत्वात् प्रज्ञाप्रमोषोऽभूदिति व्यज्यते । "मच्चित्ता मद्गतप्राणाः बोधयन्तः परस्परम्" इति गीतायां भगवद्गुणानुभवानन्द मूर्च्छासु परस्परं शैत्योपचारादिभिः बोधयन्तः इत्यप्यर्थो वर्ण्यते । मयि ममहृदयत्वात् प्राणव्यापारोपरमरूपगतप्राणत्वे परस्परं समाश्वासयन्त इत्यर्थः । राम गुणानुसन्धानवैचित्र्येण न मे किञ्चित्प्रतिभाति, क्षणात् बुद्ध्वा वक्ष्यामीत्यर्थः । अतो मध्ये वाक्यान्तरमलंकाराय । अन्यथा वाक्यगर्भितमिति वाक्यदोषः स्यात् । अहं वक्ष्यामि अहं भूत्वा वक्ष्यामि, न इदानीं नारदोऽस्मि । रामगुणश्रवणशिथिलितत्वात् । 'रामगुणमम्नोऽयं नदीप्रवाहमग्न इवावलम्बन-यष्टिमपेक्षते' इति गोविन्दराजीयरसो रस्यः । श्रुत्वा चैतत् 'एतत् श्रुत्वा' इति वाल्मीकिवचसो रसघनत्वं द्योत्यते । त्रिलोकज्ञः—मनुष्यलोके को गुणवान् इति प्रश्नः । त्रैलोक्यमपि कार्त्स्न्येन जानन्नारदो लोकत्रयेऽपि मानुषरामसमो गुणवान् नास्तीति बुध्यते इति द्योत्यते । त्रिलोकज्ञः—लोकत्रयं सदा सञ्चरन्नपि वाल्मीकिसदृशं मधुरं शिष्यं न लेभे इत्यपि द्योत्यते अनेन । "रामगुणस्मरणामृतपानादपूर्वशिष्यलाभाद्वा प्रहृष्टः" इति गोविन्दराजः ।

(मू) बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ 7

गुणानां बहुत्वं, एकैकस्य सुदुर्लभत्वं च विवक्ष्यते । परत्वविशिष्टे सौलभ्यस्यात्यन्तदौर्लभ्यम् । कीर्तिताः सानन्दं श्रोतृमनोहारितया कीर्तिताः । "सततं कीर्तयन्तो मां" इति गीताश्लोक इव कीर्तनशब्दस्यार्थो ग्राह्यः । 'स्मरणं कीर्तनं विष्णोः', । बुद्ध्वा वक्ष्यामि—अर्थं बुद्ध्वा शब्दरचना इति न्यायः । कीर्तितेषु गुणेष्वेवायं भ्रमः । तस्मात् गुणाधिकरणभूतगुणिपर्यन्तमपि न सद्यो गन्तुं शक्नोति । अतो वदति अहं एतद्बहुगुणाश्रयं वस्तु बुद्ध्वा वक्ष्यामीति । अनन्तरं तद्बुध्यते। बुद्ध्वा च वक्ति "तैर्युक्तः श्रूयतां नरः" इति । "आनन्दसंप्लवे मग्नो नापश्यदुभयं मुने" इति नारदेन स्वस्य अत्रानुभवप्रकारो वर्णितो भागवतारंभे ॥

॥ अथ संक्षेपारम्भः ॥

(मू) इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ 8

बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ 9

महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ 10

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ 11

धर्मज्ञस्सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यस्समाधिमान् ॥ 12

प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ 13

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ 14

सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ 15

सर्वदाभिगतस्सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ 16

स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ 17

विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ 18

धनदेन समस्त्यागे सत्ये धर्म इवापरः । 19

'इक्ष्वाकुवंशप्रभव'—"पिताहमस्य जगतः माता धाता पितामहः । ........ प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्" इति रामाद्भगवतो जगदुत्पद्यते । जन्मादि अस्य यत इति तल्लक्षणम् । अयमिक्ष्वाकुवंशे प्रभवतीति अस्य सौलभ्यसौशील्यादिकं प्रथममेवानुभूयते । 'को गुणवान्'

इति प्रश्नगतगुणशब्दस्य सौशील्यार्थो गृहीतो गुरुणा । अतः साम्प्रतमस्मिन् लोके को नु गुणवान् इति प्रथम प्रश्नस्य उत्तरं दीयते । निरवधिकसौशील्यगुणाधिकरणं वस्तु इक्ष्वाकुवंशे प्रभूतो रामः । कुशिकवंशप्रभवोऽन्यो रामस्तदानीं मानुषे लोके आस्ते जामदग्न्यः । सोऽपि भगवदवतारः । तद्व्यावर्तकवंशः प्रथमं कीर्त्यते । "जनकानां कुले कीर्तिमाहरिष्यति मे सुता" इति जनकः । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति जनकः श्लाघ्यते गीतायाम् । जनकात्मजेव रामोऽपि ज्ञानप्रसराध्यात्मशास्त्रप्रवर्तकमहागुरुवंशप्रसूत इति प्रथममेव कीर्त्यते । 'इक्ष्वाकुवंशप्रभवः' इति, "इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥" इति गुरुपरम्परामध्यस्थप्रसिद्धराजर्षिरिक्ष्वाकुः । रामस्य सीतावत् प्रसिद्धज्ञानिगुरुराजर्षिवंशभवत्वं द्योत्यतेऽनेन । "मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत्" इति शाङ्कर भाष्यम् । "आदिराजायेतीक्ष्वाकोः सूर्यवंशप्रवर्तकत्वेन वैशिष्ट्यमुच्यते" इति तत्रानन्दगिरिः । आदिकाव्यमिदं आदिराजर्षिवंशप्रभवरामचरित्रम् । इक्ष्वाकुर्मनुपः । मानुषवंशे प्रभूतो मानुषत्वाभिमानी मानुषीं तनुमाश्रितो रामः । 'यज्जातीयो यादृशो यत्स्वभावस्तज्जातीयस्तादृशस्तत्स्वभावः ।' 'इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् । महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥" इति रामायणकथारंभपठितश्लोकः एतदनुसारी । तत्र ग्रन्थो वर्ण्यते । अत्र नायको वर्ण्यते । रामब्रह्मविद्यासंक्षेपारम्भे प्रसिद्धाध्यात्मगुरुनाम कीर्त्यते । 'रामो नाम जनैः श्रुतः'—नाम्ना रामः । गुणैश्च रामपदयौगिकार्थपौष्कल्यवान् । तिष्ठत्वस्य राम इति संज्ञा, अयमन्वर्थतो रामः, रमयितृत्वादिगुणपूर्णत्वादिति राम नाम व्यपदेशार्हत्वेन सर्वजनावधारितः । "श्रुतः—अवधृतः । "श्रुतं शास्त्रावधृतयोः" इत्यमरः ।" इति गोविन्दराजः । "रमन्ते योगिनोऽनन्ते सत्यानन्दे

चिदात्मनि । इति रामपदेनासौ परं ब्रह्माऽभिधीयते" इत्यगस्त्यसंहिता रामनाम्नैव परब्रह्मत्वसिद्धिः । राम इति नाम्ना प्रसिद्धः । तस्येदं यौगिकं नाम । रमन्ते योगिनोऽस्मिन् इति तिलकः । सर्वैरपि जनैरस्य रमयितृत्वमनुभूतमित्युक्त्या अस्य सौशील्यं प्रतिष्ठाप्यते । जनैः सः रामनाम्ना श्रुतः । वस्तुतस्तु सः रामाभिधानो विष्णुर्नारायणस्साक्षादिति व्यज्यते । रामाभिधानो हरिरित्युवाच इति गायति कालिदासः पुष्पकविमान-प्रयाणवर्णके त्रयोदशसर्गे । तत्पूर्वमेव ब्रह्मादिभिः, साक्षात् नारायण एव रामनामा मानुष इति प्राकाशि । 'कः' इति प्रश्नस्य इक्ष्वाकुवंशप्रभवो रामः इत्युत्तरं दीयते । प्रथमं प्रश्नवाक्योक्तगुणाश्रयव्यक्तिर्निर्दिश्यते । अनन्तरं तद्गुणादयो वर्ण्यन्ते । नियतात्मा महावीर्यः इति विकाररहित्य-शौर्योक्त्या को वीर्यवान् इति प्रश्नवाक्योक्तद्वितीयगुणविवरणं क्रियते । द्युतिमान् प्रभावान् दीप्तः, तेजस्वी । वीर्येण दीप्तः तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा इति श्लोकार्धमुदाहृतं श्रीगोविन्दराजेन । धृतिमान्-एष सेतुर्विधरण एषां लोकानामसंभेदाय इति श्रूयते । अस्य विश्वविधरणवीर्यम् । "द्यौः सचन्द्रार्कनक्षत्रं खं दिशोभूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ।" इत्येतद्वीर्यं प्रसिद्धम् । "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" इति दहराधिकरणसूत्रमेतन्महिमप्रदर्शकम् । वशी वीर्यगुणप्रसरणे क्रोधादिकमाहार्यते । अस्य वीर्येण सर्वमस्य वशे तिष्ठति । कश्च वीर्यवान् इति प्रश्नस्योत्तरदाने इमे वीर्यतरसम्बन्धिगुणाः प्रस्तूयन्तेऽत्र । सत्यवाक्यो दृढव्रतः चारित्रेण च को युक्तः इति प्रश्नवाक्यस्योत्तरं दीयते, बुद्धिमान्नीतिमान्वाग्मी श्रीमान् शत्रुनिबर्हणः इत्यादिना । बुद्धिमान् प्रशस्तधीः । बुद्धेः प्रशस्त्यं नाम शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ इति तिलकः । नीतिमान् धर्मज्ञो धर्मानुष्ठाता तदनुष्ठापयिता च । वाग्मी—प्रशस्तवाक् ।

"अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते"। सत्यवाक्य एव वाग्मी भवेत्। "यथा स एवार्हति तत्र वक्तुम्" इत्यादिकं वद्वाक्यवर्णनं भाव्यम्। "श्रीमान्-श्रीः, 'ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्'' इत्युक्तश्रौतश्रीर्विवक्षिता।" इति तिलकः। "श्रीमानितिपदं सर्वत्रान्वययोग्यम्। श्रीमान् रामः श्रीमान् महावीर्यः श्रीमान् वाग्मी श्रीमान् सर्वातिशायितद्गुणकः इति सर्वत्र तात्पर्यार्थः" इति श्रीगोविन्दराजः। शत्रुनिबर्हणः — नियमेन जयशीलत्वात् श्रीमत्त्वोपपत्तिः। नित्ययोगे मतुप्। श्रीवत्सवक्षाः नित्यश्रीः' नित्यश्रीत्वानुभवे दिव्यविग्रहशोभायां मज्जति गुरुः। 'कश्चैकप्रियदर्शनः' इति प्रश्नस्य 'नित्यश्रीः कः' इत्यप्यर्थो ग्राह्यः। दिव्यविग्रहस्य सर्वदा सर्वचित्तहरत्वमपि पृष्टम्। "विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः। महोरस्को महेष्वासो गूढजत्रुररिन्दमः। आजानुबाहुः सुशिराः सुललाटः सुविक्रमः। समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्। पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः॥" श्रीमत्त्वे सति शत्रुनिबर्हण इति वपुर्वर्णनमवतारितं 'लक्ष्मीवान्' 'शुभलक्षणः' इत्युपसंह्रियते। सामुद्रिकोक्तसर्वशुभलक्षणसम्पन्नः। 'समः समविभक्ताङ्गः' इति समुदायशोभा अवयवशोभा च निर्दिश्यते। सर्वत्र समोऽयं अस्य वपुरपि समैकान्तम्। 'धर्मज्ञः सत्यवाक्यो दृढव्रतः विद्वान् कः' इति प्रश्नानामुत्तरं दीयते धर्मज्ञः सत्यसन्धश्च यशस्वी ज्ञानसम्पन्नः वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् इति। "चारित्रेण च को युक्तः आत्मवान् को जितक्रोधः" इति पृष्टस्योत्तरं दीयते 'शुचिर्वश्यः समाधिमान्' इति। 'सर्वभूतेषु को हितः' इत्यस्योत्तरं दीयते 'प्रजानां च हिते रतः, रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता, रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता, सर्वलोकप्रियः इति।

कश्चैक प्रियदर्शनः' इत्यस्य सदैवप्रियदर्शनः इति प्रतिवचनम् । "सर्वदाभिगतःसद्भिः समुद्र इव सिन्धुभिः"—"भीमकान्तैर्नृपगुणैः...... अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः" इति दिलीपो वर्णितः । तत्र समुद्रदृष्टान्तः उपात्तः भीमकान्तोभयाकारसादृश्याय । "सतां सद्भिस्सङ्गः कथमपि हि पुण्येन भवति" । 'हरिषाहि ममातुला' इति वदन् रामः कथं साधूनामनभिगम्यो भवेत् । साधूनां कदापि भीमो न भवेत् । सतीभूतानां सिन्धूनां स्वयमागतानां कथं समुद्रोऽनभिगम्यो भवेत् । "आत्मैवदाराः सर्वेषां दारसंग्रहवर्तिनाम्" इति वसिष्ठः । पत्न्या अर्धत्वं निगदति श्रुतिः । पत्नीपूर्ण आत्मैवेति वसिष्ठो वक्ति अयोध्याकाण्डे ॥ "ज्ञानीत्वात्मैव मे मतम्' इति भगवद्वानम् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति सन्तो ब्रह्मविदो ब्रह्मनिष्ठाः । ते अवतीर्णं परमात्मानं साक्षात् दर्शनसंलापादिभिः अनुभवितुं यदाऽऽगच्छन्ति न तेषामनभिगम्यो भवेद्रामः । रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारी रामः अतीव प्रियः साधूनाम् । स्त्रीणां प्रियकान्ते इव तेषां तस्मिन् निरतिशयं प्रेम । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय" इति श्रुतिरपीदृशं प्रेम प्रदर्शयितुं नदीसमुद्रदृष्टान्तं यत्ते । धर्मस्य परिरक्षिता स्वजनस्य च रक्षिता श्रीमान् शत्रुनिबर्हणः इतीमानि रामस्य भगवदवतारस्वलिंगानि । "धर्मसंस्थापनार्थाय, परित्राणायसाधूनां विनाशाय च दुष्कृतां" इति गीतायामिमान्यनूद्यन्ते । "राघवत्वेऽभवत्सीतारुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोः श्रीरनपायिनी" इति पराशरोक्तरीत्या अत्र श्रिया सहावतीर्णत्वमपि व्यज्यत इव 'श्रीमान्' इति पदस्य द्विरभ्यासेनेत्यवधेयम् । 'सीतायाः शत्रुकर्शनः' इतिवत् 'श्रीमान् शत्रुनिबर्हणः' इति पठ्यते । नाऽत्र संक्षेपे सीताविवाहः कण्ठरवेण कथ्यते । परमात्मनो रामस्य सीता नित्ययुक्ता श्रीरेवेति वक्तुमेव इव ।

श्रीमान्-श्रिया नित्यं युक्तः श्रियःपतिः। 'समुद्र इव गाम्भीर्ये'—अक्षोभ्यः कामाद्यान्तरशत्रुभिः। "आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्" इति गीताश्लोको भाव्यः। 'विष्णुना सदृशो वीर्ये'—अस्य अनन्वये पर्यवसानम्। 'अनन्वयालंकार:' इति तिलकः। 'सोमवत्प्रिय-दर्शनः'—'चन्द्रकान्ताननं राममतीव प्रियदर्शनम्'। कालाग्निसदृशः क्रोधे'-"कुशली यदि काकुत्स्थः किं न सागरमेखलाम्। महीं दहति कोपेन युगान्ताग्निरिवोत्थितः॥' इति सीतोक्तमन्वर्थितं रामेण सागरशोषण-संरम्भे। 'क्षमया पृथिवीसमः' — गंगादिपुण्यनदीपत्नी सहितसागर प्रपदनेन सद्यः क्षान्तः अपराधः। 'धनदेन समस्त्यागे'—"त्यागे सत्यपि धनदेन समः। अनेन अक्षीणकोशत्वं महोदारत्वं चोक्तम्" इति तीर्थः। "त्यागे सत्यपि धनदवदाढ्यः" इति व्याख्यानं तु प्रक्रमविरुद्धम्। न ह्याढ्यत्वं कश्चिद्गुणः। त्यागविषये धनदेन कुबेरेण समः। कुबेरस्य त्यागित्वं "त्यागेन धनदो यथा" इति वक्ष्यमाणवचनतस्सिद्धम्। न च तस्य कुतश्चित् लुब्धत्वं सिद्धम्।" इति श्री गोविन्दराजः। कुबेरस्यौदार्यं न प्रसिद्धम्। यथा त्यागरूपमहागुणे कुबेरसाम्यं सिद्ध्येत् तथा रसवदर्थः कश्चिदन्वेष्टव्यः। निधिरक्षकः कोशाधिकारे नियुक्तः कुबेरः। यस्मै यावत् धनं दित्स्यते ईश्वरेण अचिन्तयन्नेव अविचारयन्नेव कोशात् तावत् धनमुद्धृत्य ददाति कोशाध्यक्षाधिकारभाक् धनदः। धनस्वाम्यमीश्वरस्य न निध्यध्यक्षाधिकारिणः। राज्ञो कोशाधिकारी राजामात्याद्याज्ञानुसारेण आज्ञात तावत्तावद्धनानि ददाति राजस्वभूतकोशात् तेभ्यस्तेभ्यः पुरुषेभ्यः। कोशाधिकारिणः कोशपालकस्य का व्यथा स्वहस्तेन प्रभूतधनवितरणे। राजाज्ञया तत्संकल्पेन यत् प्राप्तं तेन पुरुषेण; यत् तदाज्ञया तस्य स्वभूतं तदेवायं तदाज्ञया स्वहस्तेन वितरति। वितीर्यमाणं धनं नास्य स्वं किन्तु राजस्वम्। यथा कोशपालः स्वनियन्त्रा स्वामिना यावद्धनं यस्मै कस्मैचित्

दातुमाज्ञाप्यते तत्सद्यः तस्मै प्रयच्छति स्वहस्तदत्तधने स्वत्वाभिमानरहितः तस्मिन् धने राजाज्ञावशात् गृहीतृस्वत्वबुद्धिः प्रभूतधनदानेऽपि धनवियोग-निमित्तक्लेशवियुक्तः तद्वद्यं महोदारो भगवान् स्वदीयमानप्रभूतधने स्वत्वं नैवाभिमन्यते प्रत्युत तस्मिन् धने अर्थिन एव तत्स्वामित्वबुद्धिं करोति । प्रभूतेन धनेनाहं वियुज्ये इति न लवमात्रमपि व्यथते । त्यागे ईदृशं साम्यं विवक्षितं स्यात् निधीशेन धनदेन । 'लभते च ततः कामान् मयैव विहितान् हितान्' इति गीतोक्ततत्त्वमपीह भाव्यम् । "दयाऽन्येषां दुःख-प्रसहनमनन्योऽसि सकलैः दयालुस्त्वं नातः प्रणमदपराधानविदुषः । क्षमाते रंगेन्दो भवति नतरां नाथ नतमां तवौदार्ये यस्मात्तव विमवमर्थिस्व-ममथाः ॥ इति श्री पराशरभट्टार्याणामद्भुतः श्लोकः अस्मिन्नर्थे प्रमाणम् । "लब्धं न मुञ्चति विलक्षमतिर्न भुंक्ते धत्ते पुनः पुनरसौ महतीं धनायाम् । निद्रारसं न लभते महतां निधीनां रक्षापिशाच इव सम्प्रति राजराजः" इति संकल्पसूर्योदये लोभः परिहसति धनदं लुब्ध इति । सत्ये धर्म इवापरः— यमो वैवस्वतः । रामोऽपि वैवस्वतः । यमः स्वसंयमनाधिकारात् यथा-पराधं दण्डननिर्बन्धात् सदा च्छिन्दिभिन्दि इत्यपराधिनो नियमेन दण्डयन्नेव वर्तते । भीषणः सः । रामस्तु सदैक प्रियदर्शनः न स्मरत्यपराधानां शतमप्यात्मवत्तया । सत्यगुणमात्रे यमसादृश्यमित्यवधेयम् । अयं सदा सौम्यः । सत्यधर्मनिष्ठोऽपरो विलक्षणो यमः । अपरशब्देन यमात् व्यतिरेकोऽपि व्यज्यते । "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गंगां मा कुरून् गमः ॥ इति श्लोको हृदिस्थ-रामपरमात्मपरतया व्याख्यायते । स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः-दशरथपुत्रत्वकीर्तनात्प्राक् कौसल्या सुप्रजत्वं प्रथमं कीर्तयति । कौसल्यैव चिरं जीवन्ती सर्वानुक्तान् गुणाननुबभूव । सर्वगुणोपेतत्वं तयैव सानन्द-मन्वभावि ।

( मू ) तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ॥ 19

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हिते युक्तं प्रकृति प्रियकाम्यया ॥ 20

यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ।

'तमेवं गुणसंपन्नं रामं'—'स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः' इति सर्वगुणसमाहारः पूर्वमेवोक्तः मात्रानन्दवर्धकत्वेन । अत्र पित्रानन्दवर्धकत्वेन यौवराज्याभिषेकमनोरथवर्णनावसरे पुनस्तदुच्यते । काष्ठागते आदरे पौनःपुन्यमलंकृतिः । 'श्रेष्ठगुणैर्युक्तं' इति पुनरप्यस्मिन्नेव श्लोके पठ्यते । 'रामं'—"राम इत्यभिरामेण वपुषा तस्य चोदितः । नामधेयं गुरुश्चके जगत्प्रथममङ्गलम् ॥" इति रघुवंशे वपुषोऽभिरामता रामनामकरणे मेरिकाऽभूदित्युच्यते । जातमात्रे ईदृशाभिरामगुणाविष्कारस्यानवकाशः । गुरुपरम्परायां तृतीयगुरुत्वेन परिगणितेन वसिष्ठेन कृतं रामनाम विश्वरञ्जकगुणसम्पत्त्याप्यन्वर्थीकृतमिति व्यज्यते एवं गुणसम्पन्नं रामं इति समभिव्याहारेण । अत्रायोध्याकाण्डकथासंक्षेपः प्रारभ्यते । 'सत्यपराक्रमं'—सत्यं कालत्रयेऽपि केनचिदप्यबाध्यम् । सत्यः अबाध्यः अस्य पराक्रमः । अस्य पराक्रमस्य सत्यत्वप्रतिज्ञानेन रावणि युद्धे लक्ष्मणस्य पराक्रमः सत्योऽवन्ध्योऽभवत् । 'ज्येष्ठं श्रेष्ठगुणैर्युक्तं' केकयराजेन कैकेयीविवाहसमये अन्यथा समयः पूर्वमकारि । तद्विरोधेनात्र कौसल्यासुताभिषेचनविषये दशरथमनसि स्फुरन्त्यः उपपत्तयः सूच्यन्ते । ज्येष्ठपुत्रस्य राज्ये अभिषेचनं न्याय्यम् । वैधं च । न केवलं वयसा ज्येष्ठः किन्तु गुणैरपि स ज्येष्ठः । ज्येष्ठो वस्तुतो गुणश्रेष्ठोऽपि भवति । अयमपरो हेतुर्यौवराज्याय तद्वरणे । प्रशस्यस्य श्रः

'ज्य च', 'वृद्धस्य च' इति पाणिनिसूत्राण्यत्र कविबुद्धिस्थानि । ज्येष्ठशब्दः वयसा गुणैश्चातिशायनवाची गोबलीवर्दन्यायेनात्र वयोज्येष्ठमात्रं ग्राह्यम् । ज्येष्ठ एव श्रेष्ठोऽपि भवति । 'प्रियं'— ज्येष्ठपुत्रः गुणश्रेष्ठपुत्रः प्रियतमपुत्रश्च प्रियमिति पदेऽसंकोचन्यायेन निरतिशयप्रियत्वं विवक्ष्यते । अग्रयप्रायन्यायश्च स्मर्तव्यः । ज्येष्ठश्रेष्ठपदसमभिव्याहारेण प्रियशब्देन प्रेष्ठो विवक्ष्यते । "तेषामपि महातेजा रामो रतिकरः पितुः" इति अयोध्याकाण्डारम्भे गास्यते । "न च रामं विना देहे तिष्ठेत्तु मम जीवितम्" । श्रेष्ठगुणैर्युक्तं अतोऽपि प्रियम् । "स तु श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः । बहिश्चर इव प्राणः बभूव गुणतः प्रियः ॥" इति वक्ष्यते । सूत्राण्येव गुरुसंक्षेपवचांसि । 'दशरथः सुतं'— 'भूमावनुपमः सूनुः गुणैर्दशरथोपमः' इति, गास्यते ऋषिणा । 'सुतं' इत्यसङ्कोचन्यायेन कृत्स्नायां भूम्यामनुपमसूनुत्वं विवक्ष्यते । कृत्स्नेऽपि लोके अयमेक एव ज्येष्ठसुतशब्दस्यानुत्तमं भाजनम् । "प्रकृतीनां हिते युक्तं प्रकृतिप्रियकाम्यया" — "यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।' अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥" इति स्वप्रीतिं पृष्ठतः कृत्वा प्रजाहितं प्रजारुचिं चापृच्छत् नरपतिः । 'एवं श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः । सम्मतस्त्रिषु लोकेषु', 'तथा सर्वप्रजा कान्तैः प्रीतिसञ्जननैः पितुः । गुणैर्विरुरुचे रामो दीप्तैः सूर्य इवांशुभिः 'अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते । लोके रामस्य बुबुधे संप्रियत्वं महात्मनः । आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च" इत्यादिकं भाव्यम् । 'अन्यच्छ्रेयः अन्यदुत प्रेयः' इत्युपनिषदि धर्मराजः । प्रजाविषये रामः प्रियो हितश्चाऽभवत् । प्रियहितयोस्सङ्गतमत्र । 'प्रकृतिप्रियकाम्यया'— 'इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननम्' इति प्रजानां तीव्रेच्छा । अयमपरः प्रबलो हेतुः पूर्वसमयोद्वहने । युवराजवरेण प्रकृतीनामिच्छानुरोधनिर्बन्धोऽस्मि । प्रकृतिरञ्जकत्व-

मेष हि राजत्वम्। अत्र प्रकृतिशब्दोऽभ्यस्यते तद्विषयहितयोः प्रधानहेतुत्वबुद्ध्या। प्रकृतिशब्देन सचिवा अपि ग्राह्याः। "निश्चित्य सचिवैस्सार्धं युवराजममन्यत"। 'यौवराज्येन' — युवराजस्य कर्म यौवराज्यं, राज्यवहनभारेण संयोजयितुम्। 'अहं पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि' इति रामस्तथैवावोचत्। प्रजापालनस्य धुरत्वात् यस्तद्धुरवहने अर्हत्तमः स एवाभिषेचनीयः इत्यपरो हेतुः। "ऐच्छत् प्रीत्या महीपतिः"—स्वप्रीतिश्चरमतः कीर्त्यते हेतुत्वेन। प्रीत्या महीपतिरैच्छत्। महीपतिशब्देन मह्यपि तं पतिमकामयतेति व्यज्यते। "लोकपालोपमं नाथमकामयत मेदिनी" इति वक्ष्यमाणमिह भाव्यम्। नारदहृद्गतं विवृणोति कविः शिष्यः। महीपतिरैच्छदित्युक्ते कश्चिदन्यो जनो नैच्छदिति व्यज्यते। सा च मन्थरैका।

(मू) तस्याभिषेकसंभारान् दृष्ट्वा भार्याथ कैकयी ॥ 21
पूर्वं दत्तवरा देवी वरमेनमयाचत।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ 22

'तस्याभिषेकसंभारान् दृष्ट्वा'—अभिषेकसंभारान् मन्थरा प्रासादमारुह्य ददर्श। कैकेयी तन्मुखात् तत् शुश्राव केवलम्। न सा ददर्श। मन्थराकर्तृकं दर्शनं कैकेय्यामारोप्यतेऽत्र नारदेन मन्थराचक्षुरेव कैकेयीचक्षुरभूदिदानीमिति व्यञ्जयितुम्। "रामे वा भरते वाहं विशेषं नोपलक्षये" इति स्वसुतनिर्विशेषदर्शनमेव तस्याश्चक्षुः सहजम्। इदं तात्कालिकं मन्थराचक्षुः स्वचक्षुर्भवनमिति व्यज्यते। राजानः चारचक्षुष इत्युच्यते। महिष्यपि तथैव स्यात्।

'भार्याऽथ कैकेयी'—अथशब्दो नानार्थकः। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।" अत्र प्रश्नार्थो मङ्गलार्थश्च भाव्यौ। कैकेयी भार्या किं इति सानुशयं पृच्छ्यते। भार्या—भर्त्रा भरणीया। भर्ता च तस्य

मरणीयः । भार्या—नृशंसा पतिघातिनी बभूव । न्याय्य एव तद्विषये 'इयं भार्या किं' इत्यनुयोगः । अत्रैव रामावतारनिर्वर्त्यमङ्गलकथायाः उपोद्घातः । अत्रैव पौलस्त्यवधकथाबीजमुपक्षिप्यते । अथशब्देन मङ्गलमपि ध्वनिना निर्वर्त्यते । 'कैकेयी'—केकयराजस्य पुत्री । तेन च केकयराजेन कृतः समयः कथंचित्स्मार्यते । 'पूर्वं दत्तवरा' — अनेन दशरथस्य स्त्रैणत्वाप-वादात् त्राणं क्रियते । पुत्राणां जनेः पूर्वमेव विशेषतोऽनिर्दिष्टकामवरद्वय-दानं प्रतिश्रुतम् । पूर्वमित्यस्य पुत्रजनेः पूर्वमित्येवार्थः । दत्तवराऽभूत् । 'देवी' इयमिदानीं देवैराविष्टचित्ताऽभवत् । देवग्रहमस्तहृदयाऽभवत् । वरमेन-मयाचत ' विवासनं च रामस्य भरतस्याभिषेचनं' — द्वौ वरौ परस्पराविना-भूतौ सहैव एको वर इव वृताविति व्यज्यते एकवचनेन । अयुतसिद्धाविमौ तयाचितवरौ । वरद्वयमध्ये रामप्रव्राजनं प्रथमकर्तव्यत्वेन वृतम् । देवा एवात्र कैकेयीमुखेन वरयाचितारः । रामप्रव्राजनं प्रथमकर्तव्यत्वेन सद्यः कर्तव्यत्वेन च तां वाचयन्ति । अयोध्याकाण्डारंभ एव, "गच्छता मातुलकुलं भरतेन तदाऽनघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥"

इति प्रथमश्लोकेन सशत्रुघ्नस्य भरतस्य मातुलगृहगमनं कथितम् । यदि भरतः शत्रुघ्नेन सह मातुलकुलं नाऽगमिष्यत् तदा रामविवासनसीता-हरणदशकण्ठवधादिकं नैवाभविष्यत । वर्तिष्यमाणायाः कृत्स्नायाः अवतारकार्यनिर्वहणकथायाः सिद्ध्यर्थं उपोद्घातो भवति अयोध्याकाण्डारंभ-प्रथमश्लोक इति रसोऽनुमाव्यः । 'विवासनं'—क्षौमादिवसनान्यपहाय राजकुमारविरुद्धवल्कलचीरवसनत्वं तापसव्रतत्वं च द्योत्यते विवासनशब्देन । न वने वसनमात्रं, किन्तु चीरवसनवसनव्रतमपि निर्बद्धम् । "भरतस्या-भिषेचनं' — राज्याभिषेचने हर्षजनकोत्सवत्वबुद्धिस्तस्याः । "सकलभुवन-भारः स्थापितो वत्समूर्ध्नि" इति तस्य स्वपुत्रशिरसि विश्वभरणभारनिवेशन-मिति सा न विवेदेति व्यज्यते ॥

( मू ) स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ 23

' स ' इति कैकेयीमुखात् वरद्वयश्रवणक्षण एव तस्य दुरवस्था व्यज्यते । " ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।" इत्यारभ्यायोध्याकाण्डद्वादशसर्गवर्णनमिह भाव्यम् । ' सत्यवचनात् ' — इदमेकमेवाऽवलम्भभूत् स्वप्राणस्वप्रीतिप्रजाप्रीत्यादिसर्वत्यागनिश्चये । यद्यपि प्रकृतिरञ्जनात् राजा राजा भवति, सत्यवचनव्रतविरोधे तदपि हास्यते । ' धर्मपाशेन संयतः ' — धर्मशब्दो भगवन्तं वैवस्वतं धर्मराजमपि विवक्षति । पाशशब्दस्य स्वारस्यमस्ति, तस्य तदर्थग्रहणे । ' धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना " इति दशरथनिर्णयश्लोके धर्मबन्धबद्धत्वं चेतनानाशश्च सह कीर्तिते । निर्णयोऽन्तः । निर्णयरूपान्तः तस्यान्तः अन्तकश्चभवति । ' संयतः ' — संयमशब्दश्च यमशासने प्रसिद्धः " संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् " इति बादरायणसूत्रमिह भाव्यम् । स सत्यवचनात् त्रासात् धर्मबन्धेन बद्धत्वात् प्रियज्येष्ठसुतविवासनं निश्चित्य मृत्युना धर्मबन्धेन ग्रस्त कतिपयदिवसमायुश्शेषं नरकमिवान्वभूत् । यमपाशबद्धः संयमनमेवान्वभूदिव । ' सुतं विवासयामास ' — रामं विवासयामास , प्रियं विवासयामास ॥

( मू ) स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ 24

' स जगाम वनं वीरः ' — सः – प्रियः सुतो रामः । वीरः – न निर्गमे तस्य मनाक् विक्रिया जाता । मुमुदो जगाम । 'प्रतिज्ञामनुपालयन्' — विष्णुना सदृशो वीर्ये ' । महावीरोऽयं विष्णुरूपेण स्वेन देवेभ्यः कृतां

प्रतिज्ञामनुपालयन् वनं जगाम । हेतौ शतृप्रत्ययः । पितुर्वचननिर्देशात्,– कैकेय्याः प्रियकारणात् — मध्यमणिन्यायेन 'कैकेय्याः' इति पदं, पितृवचननिर्देशः कैकेय्याः कृते', 'कैकेय्याः सर्वप्रियकारणात् वनं जगाम' इत्युभयमपि द्योतयति । कैकेयीप्रियकारणं मुख्यमित्यपि द्योत्यते तस्य चरमपठनेन । 'न नूनं मयि कैकेयी कंचिदाशंसते गुणम् । यद्राजानमवोचस्त्वं ममेश्वरतरा सती' इति रामवचनं भाव्यम् ॥

( मू ) तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥ 25
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।

'प्रिय.'—"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति गीतोक्तप्रकारेण ज्ञानिनां परमात्मा स्वतः प्रियतमः । ज्ञान्यपि तथैव परमात्मन. । परस्परमत्यर्थं वाङ्मनसागोचरनिरतिशयनिरुपाधिकप्रीतिमन्तौ । भ्रातृत्वं एकपितृपुत्रत्वोपाधिकम् । प्रियत्वं निरुपाधिकं सहजं नित्यमिति प्रियशब्दः प्रथमं पठितः । भ्राता—"देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥" इति रामेण सीतापेक्षयापि भ्रातुर्गरीयस्त्वं वक्ष्यते । अत्र सीताया अनुगमनं पश्चाद्वर्ण्यते । भ्रातुरनुगमनं प्रथमं वर्ण्यते । 'लक्ष्मण.'—एतन्नामैवास्य रामकैङ्कर्यरूपलक्ष्मीनित्यसम्पन्नत्वं प्रख्यापयति । "लक्ष्म्या अच" इति पामादिगणसूत्रान्मत्वर्थीयेनिप्रत्ययः । अकारश्चान्तादेशः" इति श्रीगोविन्दराजव्याख्या । लक्ष्मीनित्यसम्पन्नत्वं लक्ष्मणशब्दार्थः । 'लक्ष्मीवान् लक्ष्मणः श्रीलः श्रीमान्"इत्यमरः । 'चत्वारि लक्ष्मीवतो नामानि" इत्यमरसुधा । 'लक्ष्मणो लक्ष्मिसम्पन्नः बहिः प्राण इवापरः' इति अत्र लक्ष्मणनाम्नोऽन्वर्थत्वरसोऽनुभूतो ऋषिणा । "अन्तरिक्षगतः श्रीमान्' इति

विभीषणस्य श्रीमानिति वर्णनेऽयमेव रसोऽनुभूयते । न रामसेवारसादधिको रसः । "बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः" इति शैशवात्प्रभृति लक्ष्मणस्य रामरसवर्धितत्वमुक्तम् । रामसेवारसिकं विना मुहूर्तमपि लक्ष्मणो न जीवेत् । "लक्ष्मणोऽनुजगाम ह" इति ऋजेर्विह्नयो योत्स्यते इति श्रीगोविन्दराजः । "येन येन धाता गच्छति तेन तेन सह गच्छति," 'कामान्नी कामरूप्यनुसञ्चरन्' इति ज्ञानिनो मुक्ताः ब्रह्मानुगमनरताः । स्नेहाद्विनयसम्पन्नः—रामस्नेहाद्रामवाक्यबद्धः पितृविषये प्रकटितां युयुत्सां धर्षणमनोरथं च हित्वा तस्मिन्विनयमवलम्बे । अयोध्याकाण्डे एकविंशसर्गे लक्ष्मणक्रोधो वर्णितः । "हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणं चास्थिरं बालं वृद्धभावेन गर्हितम् ॥", त्रयोविंशसर्गे "अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति । राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वे च तव प्रभो ।" इत्यादिकं लक्ष्मणवचनं भाव्यम् । रामस्नेहात् तत्सान्त्ववचनगौरवात्, पितृविषये पुनर्विनीतत्वं भेजे । रामसीताभ्यां सह पितुश्चरणौ ववन्दे वनायाऽऽपृच्छावसरे । "अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः । उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम्" इति श्लोको भाव्यः । 'सुमित्रानन्दवर्धनः' – सुमित्राया आनन्दं वर्धयन् वनमनुजगाम । सुतस्य वनगमने प्रवृद्धानन्दाऽऽसीत् । अयमतो रामं सततं पालयेदिति तस्या हर्षः । रामेण सह गच्छतः अटव्यपि अयोध्या, रामसन्निधिं विना अयोध्या अटव्येवेति तस्याः मनीषा । दण्डकागमनं रामस्य वनवासः, लक्ष्मणस्य त्वयोध्यावास एवेति रसः । रामं पुरुषोत्तमं, सूर्यस्यापि सूर्यं, अग्नेरग्निं, श्रियः श्रियं, देवतानां च दैवतं च विवेद सुमित्रा । 'तस्य के ह्यगुणा-देवि वने वाप्यथवा पुरे' इति कौसल्यामाश्वासयति सा । 'भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्' — पितृनियोगं विना स्वयं वात्सल्यादगात् । अयं रामदयितः । रामस्य दयिता भार्या अनन्तरश्लोके वक्ष्यते । सौभ्रात्रानुदर्शनमस्यावतारकृत्यम् ॥

(मू) रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ 26

जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥ 27

संक्षेपे वनानुगमनावसरे एव सीतानिर्देशः क्रियते । तस्याः वनगमनानन्तरमेवावतारप्रयोजनस्यावकाशोऽभूत् । 'रामस्य नित्यं दयिता'— अग्निप्रवेशनियोजनावसरेऽपि, विवासनावसरेऽपि नित्यं दयिता । नित्यं प्राणसमा, नित्यं भार्या, हृदि सन्ततं धार्या । बिभर्तेः ऋदन्तो ण्यत् इति ण्यत्' इति गोविन्दराजः । "मनस्वी तद्गतमना नित्यं हृदि समर्पितः" इति बालकाण्डोक्तं भाव्यम् । विरहे, "अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति" इति सुन्दरकाण्डोक्तं च भाव्यम् । एतदवतारे विरहस्य सत्वात् अयं गुणोऽवश्यं कीर्तनीयः । इतरथा विरहस्य प्राणवियोजकत्वप्रसंगो भवेत् । नित्यं प्राणसमा—स्वस्मिन् शरीरत्वबुद्धिः, सीतायां च प्राणत्वबुद्धी रामस्य । "न जीवेयं क्षणमपि विना तामसितेक्षणाम्" इति तदुक्तिः । 'नित्यं हिता'—तस्य कोपे जातेपि तं सान्त्वयति सा । "स्मारये त्वा न शिक्षये" इत्यादिकं भाव्यम् । 'जनकस्य कुले जाता' 'कुलेऽजाता' इत्यपि पदच्छेदोऽभिप्रेतः । अजाता इयं जातेव । "अमानवं जातमजं कुले मनो." इति माघे रामावतारमधिकृत्य नारदोक्तं भाव्यम् । अत्र वक्ता नारद एव । सीताया ईश्वरीत्वाविरोधाय, 'कुलेऽजाता' इति पदच्छेदमभिप्रैति वक्ता । कुलशब्दो गृहार्थकोपि । "कुलं जनपदे गोत्रे सजातीयगणेपि च । भवने च तनौ क्लीबं" इत्यमरः । जनकस्य गृहेऽजाता । आविर्भूता । 'देवमायेव निर्मिता'—मायाशब्दोऽत्राद्भुतवाची । "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि" इति कृष्णविग्रहस्य मायात्वमुक्तं नारदाय स्वेनैव कृष्णेन ।

अप्राकृतत्वेपि प्राकृतवदवभासनरूपाश्चर्यशक्तिरस्ति। अन्यथा प्रतिभासनशक्त्याऽपि मायाशब्दवाच्यत्वम्। अद्भुतत्वादपि तच्छब्दवाच्यत्वम्। "माया जगन्मोहिनी"। 'देवमाया'—विष्णोराश्चर्यशक्तिरिव स्थिता।

"अनेन सौन्दर्यस्य पराकाष्ठोक्ता" इति गोविन्दराजः। वस्तुतो ज्ञानानन्दमयत्वेनाप्राकृतत्वात् न दशाननविंशतिहस्तैरपि स्पर्शसंभव इति तत्त्वमपि ज्ञाप्यते। 'सर्वलक्षणसम्पन्ना'—सर्वरूपलक्षणानामियं लक्ष्यभूता। "सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव" इति कुमारसंभवे पार्वतीवर्णनमिह भाव्यम्। "नारीणामुत्तमा वधूः" यथा रामः पुरुषोत्तमः, तथेयं नारीणामुत्तमा। वधूशब्दः स्नुषार्थकः। "समाः स्नुषा जना वध्वः" इत्यमरः। "वनवासं हि संख्याय वासांस्याभरणानि च। भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ" इति वनगमनावसरे स्नुषायै वस्त्राभरणादिदानं ज्ञाप्यते वधूशब्देन॥

(मू) सीताप्यनुगता रामं शशिनं रोहिणी यथा।
पौरैरनुगतो दूरं पित्रा दशरथेन च॥ 28

अत्र पूर्वार्धे लांगलपद्धत्यर्थकसीतानाम्ना सीरध्वजस्य देवयजनलांगलपद्धत्याविर्भूय योनिजत्वादिकं ज्ञाप्यते। "उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः"। "सीतापि राममनुगता' नारीणामुत्तमा, असूर्यं पश्या, दशरथचक्रवर्तिस्नुषा सीतापि सर्वद्रष्टा भर्तारमनुगता। "या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि। तामद्य सीतां पश्यन्ति राजमार्गगता जनाः" इति पौराणां शोचनमवधेयम्। अपिशब्देनेदं व्यज्यते। 'शशिनं रोहिणी यथा'। रोहिणी अकण्टके गगनमार्गे वल्लभं चन्द्रमनुगच्छति, इयं सकण्टके अरण्यमार्गे गच्छति। "अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्" इत्यस्या उक्तिर्भाव्या। पादुकाशुचिरियम्। पादुकाशुचिमियेष सीतेति

पादुकासहस्रप्रदर्शनम्। "अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्। इति सीतापि यद्वृत्तिमियेष प्रणमामि ताम्" इति पादुकासहस्रे। लंकातः पुनरागमने पुष्पकेन गगनमार्गे आयाति। "वरिष्ठा सर्वनारीणामेषा च दिवि देवता। रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते"। 'न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति। लोककान्तस्य कान्तत्वात् शीतरश्मेरिव क्षपा" इति रामविषये उक्तं सीताविषयेपि तुल्यम्। हृष्टः सुमुखो वनं जगाम रामः। तथैव तत्पत्नी। "पौरैरनुगतो दूरं पित्रा दशरथेन च" भ्राता लक्ष्मणः पत्नी सीता च राममनुजग्मतुः। किमत्र चित्रम्। पौरैश्च रामोऽनुगतः। दूरमनुगतः। दूरं—अदूरं इति द्वेधापि पदच्छेद इष्यते। अदूरं पित्रा दशरथेनानुगतः। दूरं पौरैरनुगतः। "यमिच्छेत्पुनरायान्तं नैनं दूरमनुव्रजेत्। इत्यमात्या महाराजमूचुर्दशरथं वचः," "तेषां वचस्सर्वगुणोपपन्नं प्रस्विन्नगात्रः प्रविषण्णरूपः। निशम्य राजा कृपणः सभार्यो व्यवस्थितस्तं सुतमीक्षमाण·" इति श्लोकौ भाव्यौ। 'न दूरमनुव्रजेत्' इति दूरानुव्रज्यातो निवृत्तोऽभूत् पिता। यद्यपि सः न्यवर्तत, तथापि तद्दृष्टिर्नैव न्यवर्तत। 'रामं मेऽनुगता दृष्टिरद्यापि निवर्तते'। रामं प्रियतमं पुत्रं परं ब्रह्म प्रेष्ठमनु प्रविष्टा दृष्टि. "अनावृत्तिश्शब्दात् अनावृत्तिः शब्दात्" इति वीप्सायुक्तनिषेधवचोरीत्या अनावृत्ताऽभूदिव। ब्रह्म संपन्नाः न च पुनरावर्तन्ते, परमात्मानमेव सदा पश्यन्ति सूरयः। तद्व्यज्यते "रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते" इति श्लोकेन। "यत्र नान्यत्पश्यति" इति भूमविद्याश्रुतिरपि भाव्या। 'पित्रा दशरथेन च' इति च शब्देन 'मात्रा' इति समुच्चय इष्यते। "अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसं। राजानं मातरं चैव ददर्शानुगतौ पथि"। लक्ष्मणः' सीता च रामाभ्यनुज्ञां संपाद्य तदनुमतौ स्वयमनुजग्मतुः। न तथा पौराः पितरौ चेति व्यज्यते कर्तरिप्रयोगं हित्वा कर्मणि प्रयोगेन।

(मू) शृंगिबेरपुरे सूतं गंगाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ 29

सूतत्वेन सुमन्त्रस्यानुगमनं नियोगकृतम्। वनभूमिपर्यन्तं रथेन सारथित्वेनानुगमनं विहितम् । तदनन्तरमनुगमनं याचितं तेन, किन्तु नाभ्यनुज्ञातम् । अनुगन्तुमिच्छन्तं व्यसर्जयत् रामः । 'शृंगिबेरपुरे' "शृंगिणां कृष्णसाराणां बेराणि—कृत्रिम शरीराणि, वञ्चनेन सजातीयमृगग्रहणार्थानि यस्मिन् तत् शृंगिबेरपुरम्" इति गोविन्दराजः । पुरनामैव वञ्चनावृत्तिद्योतकम् । 'व्यसर्जयत्' इति णिचा अनिच्छतो बलाद्विसर्जनं द्योत्यते । "गंगाकूले सूतं' । सूतपदं रथमप्युपलक्षयति । ससम्बन्धिकः शब्दः । "निवर्तस्वेत्युवाचैनमेतावद्धि कृतं मया । रथं विहाय पद्भ्यां तु गमिष्यामो महावनम्" इति गास्यातेऽयोध्याकाण्डे । 'गुहमासाद्य धर्मात्मा' । 'शृंगिबेरपुरे' इति पुरनामैव मृगवंचकत्वं सूचितम् । 'गुह' इति नामापि वञ्चनपरत्वद्योतकम् । "गूहति-गोपयति—वञ्चयति परस्वमिति गुहः" इति गोविन्दराजः । गंगाकूले इत्यनेन बहुपुष्पप्रवालवान् सुमहानिङ्गुदीपादपोऽप्युपलक्ष्यते, यत्र गुहो वृद्धैरमात्यैर्ज्ञातिभिश्च परिवृतो राममुपागतः । शृंगिबेरपुरे इंगुदीपादपच्छायायां गुहेन सहितोऽभूत् । "इंगुदीपादपः सोयं शृंगिबेरपुरे पुरा । ........................ इत्युत्तररामचरिते भवभूतिः । "गुहमासाद्य धर्मात्मा' निषादाधिपतिं प्रियम्" । "आसाद्य" इत्यत्रापि विधिवाचिना (आङा) अयानैरन्ध्रयमुक्तं" इति गोविन्दराजोक्तं रस्यम् । "तमार्तः संपरिष्वज्य गुहः" इति संपरिष्वंगपर्यन्त नीरन्ध्रसंश्लेषाभ्यनुज्ञानं व्यज्यते । "आसाद्य' इत्यत्राङा, ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् । सहसौमित्रिणा रामः समागच्छद्गुहेन सः" इत्ययोध्याकाण्ड गास्यमानरीत्या रामो गुहसमीपं सलक्ष्मणो जगामेत्यर्थो प्रायः"। जात्या मृगेन चात्यन्तनिहीने-

नेत्थं पुरस्करणनीरन्ध्रसंश्लेषादिभिरस्य धर्मात्मत्वं सुतरां प्रकाश्यते इति व्यज्यते 'गुहमासाद्य धर्मात्मा' इति समभिव्याहारेण। "भुजाभ्यां पीनवृत्ताभ्यां पीडयन् वाक्यमब्रवीत्" इति रामकर्तृकपरिष्वंगोऽपि गास्यते। 'निषादाधिपतिं प्रियम्' इत्यनन्तरपठनेन चेदमेव व्यज्यते। "निषादो मृगघाती स्यात्"। "निषाद-राजसौहृदसूचितसौशील्यसागर" इति रघुवीरगद्ये। स्वपादोद्भूतगंगाकूले सौशील्यसागरो रामो निषादराजेन संगतः। "निषादानां नेता कपिकुलपतिः क्वापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति। अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि" इति दया-शतकश्लोको भाव्यः। "रामस्यात्मसमः सखा" इति गास्यमानं स्मार्यते 'प्रिय' मिति। 'निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः"। अयं निषाद-स्थपतिः रामेणात्मसमसखित्वेनाभिमत्य संश्लिष्यते। "एतया निषादस्थपतिं याजयेत्" इति-श्रुतिः निषादस्थपतेर्वैदिकमन्त्रैर्योजनीयत्वं निजगाद। अयं निषादस्थपतिस्तत्कुले जनिष्यते, का हानिस्तद्याजने॥

(मू) गुहेन सहितो रामः लक्ष्मणेन च सीतया।
तें वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः॥ 30

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात्।
रम्यमावसथं कृत्वा रममाणा वने त्रयः।
देवगन्धर्वसंकाशाः तत्र ते न्यवसन् सुखम्॥ 31

"सह सौमित्रिणा रामः समागच्छद्गुहेन सः" इति अयोध्याकाण्डे। सीता तत्र न निर्दिष्टा। लक्ष्मणो निर्दिष्टः। तत्र लक्ष्मणपदं सीतामप्युप-लक्षयति। पुंसुहृद्गोष्ठ्यां सीतायाः न तथा प्राधान्यम्। गंगाकूले इंगुदीपा-दपच्छायायामेतेषां चतुर्णां साहित्यं चित्रेषु लेखनीयं, हृदये च लेखनीयमिति

वंकुराशयो व्यज्यते चतुर्णामपि साहित्यस्यैकश्लोकार्धे सहपठनेन। अर्धश्लोके एव तच्चित्रं परिसमाप्तम्। अनन्तरश्लोकारंभे 'ते·······त्रयः' इति गुहात् पृथक् कीर्त्यन्ते इतरे त्रयोऽपि। 'ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः'। तेवनं—देवनं, "तेवृ देवने"। क्रीडया रममाणाः गच्छन्ति वनाद्वनम्। बहूदकाः नदीः लीलया तरन्ति। "तेवनं पादचारणम्"। इतः परं पद्भ्यामेव सुरकार्यनिर्वहणार्थं यात्रा क्रियते। 'ते वनेन वनं गत्वा,' "अवश्यं रक्षणं कार्यमदृष्टे विजने वने। अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु। पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन्" इति "अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा। पृष्ठतस्तु धनुष्पाणिः लक्ष्मणोऽनुजगाम ह" इति च वक्ष्यते। सीतारक्षणार्थं तस्याः मध्ययायित्वम्। तत्सूच्यतेऽनेन। रक्षणप्रयोजनानुरोधेन सीतां मध्यतः कृत्वा गच्छतः। 'ते त्रयः वने रममाणाः' इत्यनन्तरश्लोकेनान्वयस्तेशब्दस्य। वयनेन—जगद्रक्षणनिमित्तम्। 'नदीस्तीर्त्वा बहूदकाः' 'चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात्'। भरद्वाजस्य शासनादित्येतत् 'नदीस्तीर्त्वा बहूदकाः' इत्यनेनाप्यन्वेति। "अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम्। ·······तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम्" इति नदीतरणादिकं वनाद्वनगमनं चोपदिश्यते। "एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम्। रमेत यत्र वैदेही सुखार्हा जनकात्मजा" इति वासस्य भरद्वाजमुनिना वर्णयता प्रार्थिता। "यावता चित्रकूटस्य नरः शृंगाण्यवेक्षते। कल्याणानि समाधत्ते न पापे कुरुते मनः॥" इति चित्रकूटो वर्ण्यते भरद्वाजेन। वाल्मीकिर्भगवान् तत्र वसति। त्रयाणामेतेषां तत्समीपे वास उचितः एव। रामायणं तत्र प्रणेष्यते। सप्तशृंगं रामायणम्। अयोध्याकाण्ड एकः शृंगः। उत्तरकाण्डश्चापरः। "अयं वासो भवेत्तावदत्र सौम्य वसेमहि। इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः। अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन्" इति गास्यते। भरद्वाजस्य

शासनात्,' मुन्यादिष्टत्वेन चित्रकूटवासे रतिः। वासस्थानवरणे रामरुचिनेयो लक्ष्मणः। भरद्वाजरुचिनेयो रामः। "भरद्वाजशासनपरिगृहीतचित्रकूट-गिरिकटकतटरम्यावसथ अनन्यशासनीय" इति रघुवीरगद्ये अयं रसः प्रदर्शितः। अनन्यैः परमात्मैकपरैः शासनीयो भवति सर्वेश्वरः। "वासमौपयिकं मन्ये तव राम महाबल। नानानगगणोपेतः..........गम्यतां भवता शैल-श्चित्रकूटः स विश्रुतः।..................चरतस्सीतया सार्धं नन्दिष्यति मनस्तव" इति भरद्वाजशासनम्। इति पन्थानमादिश्य महर्षिः स न्यवर्तत" इति तदा देशो वर्ण्यते। "तेषां स्वस्त्ययनं चैव महर्षिः स चकार ह। प्रस्थितांश्चैव तान्प्रेक्ष्य पिता पुत्रानिवान्वगात्।" पितेव शास्ति भगवान् भरद्वाजः स्थलविशेषे वासं कुरु इति। ताटकाताटकेयायोधनार्थं गमने माता स्वस्त्ययनं चकार। इदानीं खरदूषणदशमुखादियोधनाय गमनावसरे पितेव भरद्वाज-मुनिः स्वस्त्ययनं चकार। माता वा पिता वा तदर्थं वनं गच्छति रामः इति न वेद। भरद्वाजस्तु तद्वेद। मातापितृकर्तव्यं मुनिः करोति। "अनुप्राप्य" "कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम्।" कालिन्दीतीरमनु अगमन्। यामुने वने ते त्रयो रेमिरे। "चेरतुर्यमुनावने" "विहृत्य ते बर्हिणपूगनादिते शुभे वने वानरवारणायुते" इत्यादिकं भाव्यम्। "रममाणा वने त्रयः" ईश्वरमिथुनं तच्छेषो ज्ञानी च रममाणाश्चरन्ति। यामुनवने वृन्दावने कृष्णः शेषश्च रेमाते। न रुक्मिणी तत्र सन्निहिता। अत्र यामुनवने त्रयोपि विजह्रिरे। "रम्यमावसथं कृत्वा।" "लक्ष्मणानय दारूणि दृढानि च वराणि च। कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः। तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान्। आजहार ततश्चक्रे पर्णशालामरिन्दमः। इत्यादिकं भाव्यम्। रममाणा वने त्रयः "तदा विजह्रुः सुसुखं जितेन्द्रियाः"। तापसव्रतानुरोधेन जितेन्द्रियतया रमणं दम्पत्योरपि। "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्।" वने। "जहौ च दुःखं पुरविप्रवासात्।" "देवगन्धर्व-

संकाशास्तत्र ते न्यवसन् सुखम्।" "आत्मानं मानुषं मन्ये रामं दशरथात्मजम्।" समाद्वादश तत्रासं राघवस्य निवेशने। भुंजानामानुषान् भोगान्" इत्युक्तरीत्या पुरे मानुषानन्दोऽभूदेतेषाम्। अत्र वने तेषां तदधिको देवगन्धर्वानन्दोऽभूदिति वैचित्र्यरसो रस्यः। अयं चानन्दः अकामहतानामानन्दः जितेन्द्रियाणामानन्दः। वस्तुतः "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने"ति वर्णित निरतिशयब्रह्मानन्दभाज एव त्रयोपि॥

(मू) चित्रकूटं गते रामे पुत्रशोकातुरस्तदा।
राजा दशरथः स्वर्गं जगाम विलपन् सुतम्॥ 32

पद्पञ्चाशत्सर्गे "सुरम्यमासाद्य तु चित्रकूटम्" इति चित्रकूटप्राप्तिर्वर्णिता: तदनन्तरसर्गादारभ्य सुमन्त्रस्य अयोध्यामत्यावृत्तिः दशरथविलापादिकं च वर्ण्यतेऽयोध्याकाण्डे। संक्षेपक्रमस्य रेखानुसारि रामायणम्। राजा दशरथः स्वर्गं जगाम। यद्यपि दशसु दिक्ष्वपि दशरथस्य रथः प्रधावितुं शक्तः अथापि तस्यैकमनोरथावाप्तिसामर्थ्यं नासीदिति व्यज्यते। "अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम्। रामे राज्यमनिक्षिप्य पिता मे विनशिष्यति" इति गुहसन्निधौ लक्ष्मणविलापो भाव्यः। विलपन् सुतं स्वर्गं जगाम। प्राणवियोगक्षणपर्यन्तं सुतं विलपन्नेवास। "अन्यावाचो विमुञ्चथ। अमृतस्यैष सेतुः।" यद्यपि दशरथत्वात् पूर्वं स्वर्गमसकृत् जगाम, इदानीं तु सरथो न जगाम नापि सशरीरो जगाम। किन्तु भग्नमनोरथः सुतं विलपन् जगाम। पुत्रशोकातुरः नायं दीर्घायू राजा कदापि व्याधिपीडितोऽभवत्। तीव्रतमासह्यपुत्रशोकातुरः प्राणैर्वियुयुजे। "तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः। उच्छोषयति मे प्राणान् वारि स्तोकमिवातपः" इति दशरथदिष्टान्तसर्गश्लोको भाव्यः। तत्सर्गे "राजा दशरथः शोचन् जीवितान्तमुपागमत्" इति श्लोके अस्मिन् संक्षेपश्लोके इव 'राजा दशरथ' इति पठ्यते शिष्येण॥

(मू) मृते तु तस्मिन् भरतः वसिष्ठप्रमुखैर्द्विजैः ।
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥ 33

'राज्यस्य भरणात् भरत इति समाख्या' इति काश्यपेनोक्तं शाकुन्तले । कैकेयीविवाहात्पूर्वमेव, कैकेयीपुत्रस्य राज्याभिषेकः कार्य इति समयः कृतः । पितृदत्तवरादपि तस्य राज्यभारभरणं प्राप्तम् । "मातृदेवो भव, पितृदेवो भव । आचार्यदेवो भव" इति गुरुत्रितयशासनानुवर्तित्वमनुशिष्टं श्रुत्या आचार्यमुखेन । एतच्छ्रुतिक्रमेण अस्य गुरुत्रयनियोगोऽप्यभवद्राज्याभिषेकविषये । माता पूर्णमनस्कतया सतीव्रोत्कण्ठमनुशशास । सत्यवचोवद्धेन पित्रा तन्नियोगः कृतः । अनन्तरं वसिष्ठप्रमुखैराचार्यैरपि नियोजितः । 'वसिष्ठप्रमुखैर्द्विजैर्नियुज्यमानः' इत्यनेन मातापितृनियोजनमप्युपलक्ष्यते । गुरुत्रयनियोगोऽप्युल्लंघितः । बहुविप्रवाक्योल्लंघनं च । तत्र हेतुः केवलं स्वेच्छामात्रम् । 'नैच्छद्राज्य' मित्येक एव हेतुः । "निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः । दासभूतो भविष्यामि सुस्थितेनान्तरात्मना" इति तस्य रामदास्यैकेच्छा महानस्वनी । 'नैच्छत् महाबलः' यद्यपि राज्यभारभरणसामर्थ्यं महदेवासीत्, बलवती तस्य रामराजदास्येच्छा । "यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः । अभिषेकजलक्लिन्नो न मे शान्तिर्भविष्यति ।" इति तस्य बलवान् मनोरथः । 'दासभूताः स्वतस्सर्वे ह्यात्मानः परमात्मन.' । रामदास्ये निरतिशया रतिर्भरतस्य । भासि रतो भरतः । अत्र भाः रामदास्यलक्ष्मीः । तस्यामेवास्येच्छा । तद्रत्यैव स्वस्य भाः दीप्तिरित्यस्य बुद्धि· । 'राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि" । राज्यं चाहं च रामस्य स्वम् । तत्स्वं कथमहमपहरेयम् । "कथं दशरथाज्जातो भवेत् राज्यापहारकः" । तस्य राज्यभरणं घोरं पापमिति निश्चय· ॥

(मू) स जगाम वनं वीरो रामपादप्रसादकः ॥ 34

राज्ये गुरुभिर्नियुक्तोऽपि वनं जगाम। किमर्थम्। रामपादप्रसादनार्थम्। तातपादाः आचार्यपादाः इति वदेयुर्जनाः। अयं तु तातपादानां आचार्यपादानां च नियोगमुल्लंघ्य तत्प्रसादमनपेक्ष्य, 'गुरुं महारण्यगतं यशस्विनं प्रसादयिष्यन्' इति रीत्या रामपादान् प्रसादयितुं वनं जगाम। मातृमुखात् दशरथमृतिश्रवणे "यो मे भ्राता पिता बन्धुः यस्य दासोऽस्मि धीमतः। तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः। पिता हि भवति ज्येष्ठः धर्ममार्यस्य जानतः। तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम" इति भरतोक्तं माव्यम्। 'रामपादप्रसादकः' रामस्य पादयोः पतित्वा शिरसा याचने मनोरथः। "यावन्न चरणौ भ्रातुः पार्थिवव्यंजनान्वितौ। शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति" इति रामपादयोः प्रसादनं संकल्पितम्। "आर्यपादाविमौ मतौ" इति पादुकयोः पादाभिन्नत्वमभिमतम्। तेन च संकल्पस्य न मोघीभवनम्॥

( मू ) गत्वा तु स महात्मानं रामं सत्यपराक्रमम्।
अयाचत् भ्रातरं राममार्यभावपुरस्कृतः॥ 35

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्।

"अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्" इति विश्वामित्रोक्तरीत्या तपसि स्थिताः महात्मानं रामं सत्यपराक्रमं विदुः। रामभक्तितपसि स्थितो भरतोपि तथैव रामं वेद। "तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे" इति गास्यते लक्ष्मणमुखेन। 'अयाचत् भ्रातरं रामं राज्याभिषेकांगीकारमयाचत। स एवानेन म्रियमाणो वरः। माता भरताय राज्यदानं रामविवासनं चाऽवृणुत। आर्यभावपुरस्कृतः पुरस्कृतोत्तमार्यस्वभावः। आर्ये ज्येष्ठे भावो रतिः तत्पुरस्कृतः। अस्य भरतस्य रतिरार्ये रामे, आर्यरामभक्ता। नास्य राज्ये रतिः। 'दृढभक्तिरिति ज्येष्ठे' इति रघुवंशोक्तं भाव्यम्। 'भ्रातरं' त्वयैवाहं भरणीयः।

राज्यं चाहं च रामस्य भारः तद्वरणीयम् । रामं — रमयतां वरम् । नियतमो भ्राता भरतः अवश्यं रामेण सर्वरमयित्रा रमयितव्यः । 'त्वमेव राजा धर्मज्ञ' इति रामं वचोऽब्रवीत् । 'त्वमेव राजा धर्मज्ञ' इति भरतस्य वाक्यावचः । 'त्वमेव राजा' अत्रैवकारोऽन्ययोगव्यवच्छेदकः अयोगव्यवच्छेदकश्च । राजैव त्वं, न त्वं तापसो भवितुमर्हसि । 'स राजा द्विपदां वरः ।' 'त्रयाणामपि लोकानां राज्यमर्हति राघवः' ॥ नाहं राज्यभारं वोढुं क्षमः । "दुरावारं त्वदन्येन राज्यखण्टमिदं महत् । गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः । अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥"

(मू) रामोऽपि परमोदारः सुमुखः सुमहायशाः ।
न चैच्छत्पितुरादेशात् राज्यं रामो महाबलः ॥ 36

रामोऽपि — स्वभावतः सर्वरमयितृत्वशीलोऽपि । परमोदारोऽपि - परो मा अस्मादिति परमः । औदार्ये निःसमाभ्यधिकोऽपि । सुमुखोऽपि— आर्यभरतविषये परमप्रसन्नोऽपि । "न ह्यर्थिनः कार्यवशादुपेताः काकुत्स्थवंशे विमुखाः प्रयान्ति" इति रघुवंशोक्तश्लोक उदाहृतो गोविन्दराजेन । सामान्यार्थिष्वपि न विमुखो भवेत् । सुमहायशाः — अर्थिमनोरथपूरणे अस्य सुमहद्यशः । एवमपि राज्यं न चैच्छत् । तत्र द्वौ हेतू । तत्र प्रथमः पितुरादेशात् इति । पितुश्चरमादेशो मान्यतमः । स चादेशः आत्मानं सत्यप्रतिज्ञं कर्तुं कृतः । पितुर्नियोगपालनं, पितृसत्यव्रतपालनं च । अपरश्च हेतुः महाबल इति । जामदग्न्यजयेनास्य बलं निस्समाभ्यधिकमिति प्रकाशितम् । एतं महाबलं विहाय कोऽन्यो 'लोकत्रयकण्टकभूतदशकण्ठकण्ठच्छेदसमर्थः ॥

(मू) पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ॥ 37

राज्याय – राज्यं कर्तुं, राज्यपरिपालनाय ।, रामे वने भरतो राज्याय । रामः स्वस्थाने स्वपादुके स्वप्रतिभूत्वेन ददौ राज्याय – राजकर्मनिर्वाहाय । राज्यभारनिर्वहणं रामे न्यस्तं भरतेन । रामेण तद्द्वारो भरतद्वारा स्वपादुकयोर्न्यस्तः । "भ्रात्रा हि मयि स न्यासः निक्षिप्तः सौहृदादयम् । तमिमं पालयिष्यामि राघवागमनं प्रति ।" "आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ।" "भरताय परं नमोऽस्तु तस्मै प्रथमोदाहरणाय भक्तिभाजाम् । यदुपज्ञमशेषतः पृथिव्यां प्रथितो राघवपादुकाप्रभावः" इत्युक्तरीत्या भरतः पादुकाऽर्चनमार्गदर्शाचार्योऽभवत् । भरतोपज्ञं पादुकापूजनसंप्रदायततिः । पादपूजास्थाने पादुकापूजा क्रियते । "ततो भरताग्रजः भरतं पुनः पुनर्निवर्तयामास ॥" भरतस्याग्रजत्वात् रामस्तं तत्कांक्षितस्वाभिषेचनमनोरथात् निवर्तयितुं शक्तोऽभूत् । अग्रजपारतन्त्र्यैकस्वरूपत्वात् तन्निवृत्तिः शक्याऽभूत् । "शेष्ये पुरस्ताच्छालायाम्" इति प्रायोपवेशं कर्तुमैच्छत् ॥

( मू ) स काममनवाप्यैव रामपादावुपस्पृशन् ॥ 38
नन्दिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ॥

"यावन्न चरणौ भ्रातुः शिरसा धारयिष्यामि" इत्येकः कामः । "यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः । अभिषेकजलक्लिन्नः न मे शान्तिर्भविष्यति ॥" इत्यपरः । इयं कामस्य काष्ठा । सा नावाप्ता । भ्रातृचरणयोः शिरसा धारणकामना त्ववाप्ता । रामपादावुपस्पृशन् – पादतुल्यत्वेनाभिमतपादुकयोः शिरसि धारणमात्रं लब्धम् । पादावुपस्पृशन् तदनुमत्येन राज्यमकरोत् । रामागमनकांक्षया राज्यमकरोत् । रामागमनाशा एव तस्य प्राणधारकोऽभूत् । 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यः पाति प्रणयिहृदयं विप्रयोगे रुणद्धि ।' 'रामागमनमाकांक्षन् भरतो भ्रातृ-

वत्सलः' नन्दिग्रामे — ग्रामे राज्यमकरोत् । न नगरे, न राजधान्याम् । तापसव्रतनियमविरुद्धत्वान्नगरवासस्य । प्रतिनिवृत्तं रामं पुरस्कृत्य तदभिषेकोत्सवसंरंभपुरस्सरमेव राजधानी प्रविश्येत । भरताश्रमस्य ग्रामस्थत्वमेवोचितम् । रामगिर्याश्रम इव भरताश्रमः । चत्वारोऽपि भ्रातरः आश्रमवासिन एवाभवन् । 'नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिस्सह' इति गास्यते राज्यकरणस्य दुःखमयत्वम् । नन्दिग्रामे दुःखमयी स्थितिः । 'नन्दिग्राम' इति नाममात्रम् । यथा अशोकवनिकानाम । 'शोकग्रामः' इति तत्त्वम् । विपरीतलक्षणा । क्रोशमात्रे त्वयोध्यायाः नन्दिग्रामः । "राज्यमकरोत्" इति परस्मैपदेन स्वस्य तस्मिन् फलत्वनिवृत्तिरवगम्यते" इति गोविन्दराजव्याख्या । उपस्पृशन् — 'प्रत्यहं सेवमानस्सन्' इति तद्व्याख्या । रामपादौ — "आर्यपादाविमौ मतौ" इति भरतस्य रामपादुकयोः रामपादनिर्विशेषा बहुमतिः । सा भरतमतिः व्यज्यते 'पादौ' इति निर्देशेन । राजसूयेन इयक्षमाणो युधिष्ठिरः, "त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति । विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये । तद्देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः" इति श्रीकृष्णपादुकासेवामहिमानमगायत्, भागवतदशमे द्विसप्ततितमाध्याये ॥

(मू) गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ 39

रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ 40

गते तु भरते — भरतस्य चित्रकूटान्निवर्तनं बहुप्रयाससाध्यमभवत् । श्रिया सीतया सहितोऽपि रामः भरतगमने सम्पन्ने एव श्रीमानभवत् । यस्य भरतस्य क्षणविरहोऽपि रामस्यातिदुस्सहः, तस्य भरतस्य स्व-

सकाशात् अपवाहनमेवाकांक्षितव्यमभवत् स्वावतारकार्यनिर्वहणाय। "निश्चितापि हि मे बुद्धिर्वनवासे दृढव्रता। भरतस्नेहसन्तप्ता बालिशीक्रियते पुनः॥". "कदा न्वहं समेष्यामि भरतेन महात्मना" इति विलपति रामः पञ्चवट्यां भरतविरहसन्तप्तः। भरतनिर्बन्धस्य दुर्लभ्यत्वेऽपि अयोध्यां प्रति रामनिवर्तनमेव शिरसा याचमानस्य भरतस्याऽयोध्यां प्रत्यागमनं स्वकर्तव्यवनवासव्रतस्वकृतराक्षसवधप्रतिज्ञाविरोधित्वात् न तथैकान्तेनेष्टमभूत्। गते तु भरते सत्यसन्धोऽभवत्। स्थिते तु तस्मिन् सन्धायाः शिथिलीभवनभयम्। श्रीमान्--प्रतिज्ञाभंगभयजनितविषादविगमात् उत्पन्नकान्तिविशेषः। सत्यसन्धः— भरतनिर्बन्धेनाप्यविचाल्यप्रतिज्ञः। जितेन्द्रियः— 'मातृभरतादिप्रार्थनाव्याजे सत्यपि राज्यभोगलौल्यरहितः' इति श्रीगोविन्दराजः। पुनरागमनं— स्वेन सह पूर्वमागत्य भरतेन सहागतानां पुनरागमनम्। नागरस्य जनस्य पुनरागमनमालोच्य— वनवासव्रतनियमस्य नागरजनानां भूयस्समागमः विरोधीत्यभिप्रायः। वनवासव्रतं नागरजनभूयस्संमिश्रणेन भज्येत। आरण्यकैस्सह वसतिः समागमश्च तद्व्रतोचितः। एकाग्रः— वनवसतिः नागरसमागमः इति व्यग्रता भवेत्। वनव्यग्रता नागरव्यग्रता च। ऐकाग्र्येण आरण्यकजनसमागम एव वनवासव्रतानुरोधी स्यात्। वनवासव्रते एकाग्रः दण्डकान् गन्तुमियेष। 'इह मे भरतो दृष्टो मातरश्च सनागराः। सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः॥ स्कन्धावारनिवेशेन तेन तस्य महात्मनः। हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम्॥ तस्मादन्यत्र गच्छामः इति संचिन्त्य राघवः। प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः॥' इति काव्ये। 'न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा' इति कारणबहुत्वं दण्डकाप्रवेशे। चशब्देन इतरकारणसमुच्चयः। दण्डकान् प्रविवेश ह— 'वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्य इवाभ्रमण्डलम्' इत्ययोध्याकाण्डान्तिमश्लोके महारण्यप्रवेश उक्तः। अत्रायोध्याकाण्डः

इतिवदस्य वचनम् । शरभंगसुतीक्ष्णागस्त्यतद्भ्रातॄन्महर्षीन् ददर्श । अगस्त्यभ्रातृदर्शनानन्तरं अगस्त्याश्रममगमद्रामः । अत्र 'अभ्यर्हितं पूर्व' मिति न्यायमनुसृत्य वस्तुक्रमविपर्ययः । "अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् । मनोरथो महानेषः हृदि मे परिवर्तते ॥ यदहं तं मुनिवरं शुश्रूषेयमपि स्वयम्" इति कथयन् रामः अगस्त्याश्रममार्गं पप्रच्छ सुतीक्ष्णमुनिम् । "अहमाख्यामि ते वत्स यत्रागस्त्यो महामुनिः" इति तन्मार्गमादिशत् सुतीक्ष्णमुनिः । 'अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् । अगस्त्यमभिगच्छेति सीतया सह राघव । दिष्ट्या त्विदानीमर्थेऽस्मिन् स्वयमेव ब्रवीषि माम्' इति सुतीक्ष्णः स्वयमेवागस्त्यदर्शनविषये राममादेष्टुकामोऽभवत् । इदं सर्वं व्यज्यतेऽगस्त्यदर्शनस्य सुतीक्ष्णदर्शनानन्तरपठनेन । अगस्त्यभ्रातरं तथा इति संक्षेपे काव्ये च भ्रातुर्नाम न निर्दिष्टम् । सुदर्शन इति तन्नामेति गोविन्दराजः । अगस्त्याश्रमगमनमार्गे मध्येमार्गं सन्ध्याकालाभिवर्तनात् तद्भ्रातुराश्रमे निशामनयद्रामः । रात्र्यां व्यतीतायां विमले सूर्यमण्डले अगस्त्यभ्रातरमामन्त्र्य अगस्त्याश्रमं जगाम ॥

( मू ) अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ 42

अगस्त्यदर्शनं तद्भ्रातृदर्शनं च कीर्तितम् । अगस्त्यवचनाच्चैव इति अत्र पठनेन मध्यनिर्दिष्टागस्त्यभ्रातृदर्शनं अगस्त्यदर्शनात्पूर्वमेव वृत्तमिति स्पष्टं द्योतयति । महर्षिपरतन्त्रतायामेव वृद्धसेविनो रामस्य रुचिः । सर्वं तद्वचनादेव कार्यम् । वचनात्प्रवृत्तिः वचनान्निवृत्तिः । ऐन्द्रं शरासनं—धनुरिदं वैष्णवम्, यद् जामदग्न्यहस्तात् रामहस्तगतं, रामेण च वरुणहस्ते निक्षिप्तम् । वरुणेन च इन्द्रद्वारा अगस्त्ये निक्षिप्तमिव अगस्त्यानुग्रहपूर्वकं रामहस्तं प्रापयितुम् । इन्द्रेणागस्त्ये निक्षिप्तत्वात् ऐन्द्रमिति कथ्यते । खड्गः

तूणी च ऐन्द्रावेव । 'इदं दिव्यं महच्चापं हेमरत्नविभूषितम् । वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥' इति काव्ये । 'अनेन धनुषा राम हत्वा संख्ये महासुरान् । आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ।' इति च । रावणस्य वधार्थिभिर्देवैरर्थितो विष्णुर्मानुषत्वेन रामत्वेन जज्ञे । तद्वत् रामरूपाय तस्मै महदनुग्रहपूर्वकं दीयते । 'अथेन्द्रशत्रुं तरसा जघान' इतीन्द्रशत्रू रावणः । इन्द्रो जितस्तेन । इन्द्रादिप्रार्थनयाऽवतारः कृतः । इन्द्रस्य खड्गादिभिरेव रावणादिवध इष्यते महर्षिणा रामेण च । परमप्रीतौ—इदमपि कारणम् । 'जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा' इत्याशीः रामाय प्रायुज्यत ॥

(मू) वसतस्तस्य रामस्य वने वनचरैस्सह ।
ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥ 43
स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ 44

'यदा रामः वने वनचरैस्सह अवात्सीत्, तदा सर्वे ऋषयः राममभ्यागत्य रावणादिरक्षसां वधं प्रार्थयामासुः ।' इत्येतावदेव कथ्यते । अस्य वृत्तान्तस्य अगस्त्यदर्शनानन्तर्यं नात्राभिप्रेयते । शरभंगाश्रमावस्थानसमय एव ऋषयोऽभ्यागमन् । 'शरभंगे दिवं याते मुनिसंघाः समागताः । अभ्यागच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥' इति षष्ठसर्गारंभः । महर्षिविशेषाणां दर्शनं प्रथमं गीयते संक्षेपे । महर्षिसंघदर्शनं, तत्प्रार्थना, तेभ्यः प्रतिश्रवश्चानन्तरं कथ्यन्ते । सर्वे ऋषयः —'वैखानसाः वालखिल्याः संप्रक्षाला मरीचयः । अश्मकुट्टाश्च बहवः पत्राहाराश्च धार्मिकाः ॥ दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे । गात्रशय्या अशय्याश्च तथैवाभ्रवकाशकाः ॥ मुनयस्सलिलाहाराः वायुभक्षास्तथापरे । आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ व्रतोपवासिनो दान्ताः तथार्द्रपटवाससः । सजपाश्च तपोनित्या-

स्तपोन्विताः । सर्वे ब्राह्मया श्रिया जुष्टा दृढयोगाः समाहिताः । शरभंगाश्रमे राममभिजग्मुश्च तापसाः ॥ अभिगम्य च धर्मज्ञाः रामं धर्मभृतां वरम् । ऊचुः परमधर्मज्ञमृषिसंघास्समाहिताः ॥' इति काव्योक्ताः विविधा महर्षिसंघाः सर्वशब्देन विवक्षिताः । परमधर्मः — शरणागतत्राणम् । 'ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः । परिपालय नो राम वध्यमानान्निशाचरैः' इति तेषामभयप्रार्थना । राक्षसानां वने — तेषां निवासस्थानभूते वने एव तेषां वधं प्रतिशुश्राव । तथा इति महर्षिकांक्षितं प्रतिजज्ञे ॥

( मू ) प्रतिज्ञातश्च रामेण वधस्संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ 45

'तथेति प्रतिशुश्राव' इति ऋषिभ्यो राक्षसवधप्रतिज्ञानं स्पष्टमुक्तं पूर्वश्लोके । "आश्रवसंगरसन्धाः प्रतिश्रवः संश्रवः प्रतिज्ञा च' इति हलायुधः" इति कोशमुदाहृत्य 'यथा ऋषिभिरर्थितः तथा प्रतिजज्ञे' इत्यर्थः इति पूर्वश्लोकव्याख्या गोविन्दराजस्य । प्रतिपूर्वकश्रुधातोः प्रतिज्ञार्थकत्वं प्रसिद्धम् । पूर्वश्लोकेनास्य श्लोकस्य पुनरुक्तता परिहरणीया । सुपरिहरा च सा । आरण्यकाण्डषष्ठे रक्षोवधप्रतिज्ञानं कृतं मुनिसंघेभ्यः । नवमसर्गे सीतया 'विना वैरं च रौद्रता नाविष्करणीया' इति विस्तरेण स्मारितम् । 'स्मारये त्वां न शिक्षये', 'विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण' इति तस्या निवेदनम् । 'न कथंचन सा कार्या गृहीतधनुषा त्वया । बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान् । अपराधं विना हन्तुं लोकान् वीर न कामये' इति तस्याः अनपराधिराक्षसहननानिच्छा निवेदिता तया । ऋषिभ्यः कृतायाः प्रतिज्ञायाः सीतावाक्येन शैथिल्यजनिप्रसंगे, तत्प्रतिज्ञायाः अकम्पनीयतया दृढता पुनः प्रतिज्ञाता रामेण 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः' इति । इदं च

स्थाननिवासिराक्षसानन्विष्य तान् हन्तुं स्वयं तत्र जगाम । इदं च तत्रैव वसता इत्यनेन व्यज्यते । 'वसतस्तस्य रामस्य' इति षष्ठ्यनादरे षष्ठी । राममनाहत्य शूर्पणखा सीतामुपरोद्धुं मारमत । सीताविषय एव सा आततायिन्यभवत् ।

विरूपिता कामरूपिणी— विरूपणानन्तरं न तदवयववत्ता कामतः सम्पादयितुं शक्या । 'कामरूपिणी' काममावैकनिरूपणीया काममयी अभवत् । 'समुपेतास्मि भावेन भर्तारं' इति तद्वचः । 'रावणावरजा तत्र राघवं मदनातुरा । अभिपेदे निदाघार्ता व्यालीयम लयद्रुमम्' इति कालिदासः । 'कामातुराणां न भयं न लज्जा' । कामाविष्टत्वाभावे कथं तेया स्वकामः कथ्येत । सीतालक्ष्मणसन्निधौ 'विरूपिता कामरूपिणी,' कर्णनासिकाच्छेदकयोः तयोः तदनन्तरमपि काममावमप्यभवत् । छेदनाभिभूतापि काममय्येवासीत् । अत एव काममयी सा स्वावयवच्छेदकौ तौ वर्णयति सोदररावणसन्निधौ । कर्णनासिकाच्छेदेन न मनागपि तस्याः कामच्छेदोऽभवदिति व्यज्यते । विरूपितत्वेऽपि काममावैकनिरूपणीया शूर्पणखा । 'शूर्पणखा' इति संज्ञयैव तस्याः घोररूपत्वं प्रख्याप्यते । कामिन्यास्तस्याः नखच्छदादिकं कस्य नैरस्यानुभाव्यं भवेत् । शूर्पणखा राक्षसी इति निर्देशेन तस्याः कामितपुरुषानानुरूप्यं व्यज्यते, यत् चतुरं विव्रियते कविना शिष्येण 'सुमुखं दुर्मुखी रामं' इत्यादिश्लोकैः । तेन विरूपिता रामस्य दक्षिणो बाहुः लक्ष्मणः । अतः लक्ष्मणकर्तृकविरूपणं रामबाहुकृतविरूपणमेवेति गुरोरभिप्रायो व्यज्यते ॥

( मू ) ततः शूर्पणखा वाक्यादुद्युक्तान्सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ 47

( मू ) निजघान रणे रामः तेषां चैव ...

वने तस्मिन्निवसता जनस्थाननिवासिनाम् ।
रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥ 48

शूर्पणखावाक्यमात्रात् सर्वे राक्षसाः रामं योद्धुमुद्युक्ताः । स्वस्थाने स्वासीनो रामः जनस्थानादागत्य सर्वैः राक्षसैरभियुक्त इति गुरुः पुनः पुनर्वदति। 'वने तस्मिन् निवसता जनस्थाननिवासिनाम्। रक्षसां निहतान्यासन् सहस्राणि चतुर्दश' इति इदं पुनः स्पष्टीक्रियते । यद्यपि खरवधः चरमवृत्तः, तथापि स एव प्रथमं रामोपरि शरान् प्रचिक्षेप, तदनन्तरं इतरे । 'ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः । ततस्तं भीमधन्वानं क्रुद्धास्सर्वे निशाचराः । रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम्'' इति वर्ण्यते कविना । अतः प्रथमं खरः निर्दिश्यते, सैनिकाश्च तत्सदानुगत्वेन चरमं निर्दिश्यन्ते । अल्पाल्पेनार्धाधिकमुहूर्तेन चतुर्दशसहस्ररक्षसां हतत्वात् अत्र वधे न क्रमकथननिर्बन्धः इत्यप्यभिसन्धिः स्यात् । शूर्पणखाकामातुरता-मूलः, तदग्रजरावणकामातुरतामूलश्च सर्वराक्षसवधः । शूर्पणखावाक्यात्— 'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः' इति पृष्टे, "काम एषः" इति कामस्य पापकर्मकारयितृत्वमुक्तम् । अत्र कामरूपिण्याः कामिन्याः शूर्पणखायाः कामक्रोधमूलकवाक्यश्रवण-मात्रात् किमप्यविचारयन्तः चतुर्दशसहस्रराक्षसाः राममभ्ययुध्यन् । वाक्यादुद्युक्तान्—तस्याः वाक्यमात्रात् उद्युक्तान् । सर्वराक्षसान्—नैकोपि किं तत्त्वं किं न्याय्यमिति विचारयामास ॥

(म) ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥ 49

वार्यमाणः सुबहुशो मारीचेन स रावणः ।

न विरोधो बलवता क्षमो रावण तेन ते ॥ 50

अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।
जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ 51

अकंपनात् चारात् श्रुत्वा क्रोधमूर्च्छितोऽभवत् । पश्चात् शूर्पणखामुखात् सीतासौन्दर्यश्रवणे काममूर्छितोऽभूत् । क्रोधमूर्छितः मारीचं सहायत्वेन वरयामास । मारीचाश्रमस्य प्रथमगमने सहायत्वेन वरणं कृतम् । 'जनस्थानमवध्यं तत्सर्वं युधि निपातितम् । तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे' इति साहाय्यप्रार्थना कृता । मारीचेन वारितः तद्वाक्यमादृत्य तदा निवृत्तः । पुनरपि शूर्पणखामुखात् सीतासौन्दर्यश्रवणे काममूर्छितो भूत्वा पुनर्मारीचाश्रममभिययौ । तं च शरणमगमत्, "आर्तोऽस्मि मम चार्तस्य भवान् हि परमा गतिः" इति स्वस्य कामभृशार्तत्वं मारीचैकगतिकत्वं अनन्यगतित्वं च ब्रुवन् । तदैव सुबहुशो वारितः प्रतिषिद्धो रावणो मारीचेन । तदैव मारीचवाक्यमनादृत्य "न चेत्करोषि मारीच हन्मि त्वामहमद्य वै । एतत्कार्यमवश्यं मे बलादपि करिष्यसि' इति भर्त्सनेनाङ्गीकारयत् । "जगाम सहमारीचः" इत्यनिच्छतोऽपि मारीचस्य रावणेच्छया नयनं व्यज्यते गमने सहयोगनिर्देशेन । 'जगाम तस्याश्रमपदं तदा' ।

(मू) तेन मायाविना दूरमपवाह्य नृपात्मजौ ।
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ 52

तेनेति — तन्मायाया आश्चर्यशक्तित्वं व्यज्यते । माया अस्यास्तीति मायावी । अस्त्यर्थे विनिः । यद्यपि अनिर्वचनीया माया अस्तीति वा नास्तीति वा निर्वक्तुमशक्या स्यात् तथापि मारीचस्य माया अस्त्येव । यत्सदस्ति । अतोऽयं मायावीति व्यपदिश्यते । अस्य माययैव सीता-

गृध्रं निहतं दृष्ट्वा – अत्यल्पावशिष्टप्राणो निहतप्रायः निहत इत्युच्यते । "तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः । ददर्श भूमौ पतितं समीपे राघवाश्रमात् । सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् । गृध्रराजं विनिहतं विललाप सुदुःखिता" इत्यल्पावशिष्टप्राणे विनिहतशब्दः प्रयोक्ष्यते । मरणस्य सद्योभावित्वात् तथा व्यवहारः । अस्मदर्थे त्यक्तजीवितोऽयमिति सीतारामलक्ष्मणानां शोकतापः । दशरथवयस्येऽस्मिन् प्रवयसि वयसि पितृत्वाभिमानो दाशरथेः । अस्य च रामे पुत्रत्वबुद्धिः सीतायां च स्नुषात्वबुद्धिः । "निपपात हतो गृध्रः धरण्यामल्पजीवितः । तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् । अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता" इति सीतायाः अस्मिन् बन्धुत्वबुद्धिः, द्रुमपक्षिमृगसामान्येष्वपि बन्धुत्वबुद्धिरेतस्याः किं पुनर्दशरथचिरवयस्ये स्वाश्रमपालके स्वकृते दशमुखमपि प्रतिरुध्य भृशं विक्रम्य प्राणत्यागं कृतवति । "धावन्ति नूनं काकुत्स्थ मदर्थं मृगपक्षिणः । अयं हि कृपया राम मां त्रातुमिव संगतः । शेते विनिहतो भूमौ ममाऽभाग्याद्विहंगमः ।" इति सीतया मृगपक्षिणां सामान्यतो बन्धुभावः अस्मिन् विशेषश्च उक्तः । प्राणवियोगकतिपयक्षणपूर्वं अस्य सीतारूपेश्वरीपरिष्वंगः रामरूपेश्वरपरिष्वंगः तदुभयोरतिस्निग्धकरुणवीक्षणं च समभवत् । "प्राज्ञेनात्मना सम्परिष्वक्तः उत्सर्जन् याति" इति श्रूयते । एतद्विषये सा श्रुतिः प्रत्यक्षीक्रियते । म्रियमाणाः बन्धवः परिष्वज्येरन् विलप्येरन् संस्कारिष्येरंश्च बन्धुजनैः । ईश्वरमिथुनेन पर्यायेण साक्षात् सर्वसाक्षिकं परिष्वक्तः अयं मुक्तिं प्राप । निहतगृध्रदर्शनं मैथिल्या अपि वृत्तम् हननस्य तत्समक्षवृत्तत्वात् । विलपनहेतोस्सीताया अपि तुल्यत्वात् 'गृध्रं हत्वा जटायुष' मित्युक्तम् । तदनन्तरश्लोकेऽस्मिन् 'गृध्रं च निहतं दृष्ट्वा राघवो विललाप' इति वचनेन सीताया अपि गृध्रवधजन्मविलपनमर्थात्सूचितं भवति । 'हतां श्रुत्वा'

राघवविषये शोकहेत्वन्तरमुच्यते ।

पर्यं च द्योत्यते । हतां श्रुत्वा इति श्रवणं गृध्रमुखादिति अर्थाल्लभ्यते । वक्त्रन्तराऽनिर्देशात् श्रुत्वा च इति गृध्रमुखाच्छ्रवणहेतुसूचनेन निहतमित्यस्य अल्पावशिष्टजीवार्थकत्वं व्यज्यते । जटायुदर्शनात्पूर्वमेव सीतान्वेषणमारब्धम् । सीतामन्विष्यति भगवान् । तस्य तद्विषयतत्त्वश्रावकोयं जटायुः । तां लंकाऽशोकवनिकास्थितां दृष्ट्वा तत्सदमुपदेक्ष्यति हनूमतेऽस्य ज्येष्ठभ्राता संपातिः । जटायुमुखात् श्रवणं सीतान्वेषिणो रामस्य, संपातिमुखात् श्रवणं सीतान्वेषिणो हनूमतः । अस्मिन् श्लोके दर्शनश्रवणयोर्न श्रुतिप्रसिद्धभेदो विवक्ष्यते । सीताविषयश्रवणमात्रमधुना । श्रुत्वा जटायुषो वाक्यमिति कविना वक्ष्यते । तद्दर्शनं कृच्छ्रसाध्यम् । चकारद्वयेन शोकहेतुसमुच्चायकेन शोकस्य द्विगुणीकृतत्वं द्योत्यते । 'द्विगुणीकृततापार्तः' इतीदं वक्ष्यते काव्ये ॥

(मू) ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ।
मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ॥ 54
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ 55

तेनैव शोकेन इति पूर्वोक्तशोकहेतुभूतविषयद्वयं परामृश्यते । अथवा निहतगृध्रदर्शनजनितशोकमात्रं वा । 'सीताहरणजं दुःखं न मे सौम्य तथा गतम् । यथा विनाशो गृध्रस्य मत्कृते च परन्तप ॥' इति गृध्रवधस्याधिकदुःखत्वं वक्ष्यते रामेण । जटायुदहने शोकरूपज्ञानाग्निरेवानुरूपाग्निरिति व्यज्यते 'शोकेनैव दग्ध्वा' इति सावधारणोक्त्या । व्याजमात्रं प्राकृताग्निः । जटायुषो राघवकरुणाज्योतिषा सर्वपूर्वकर्माणि भस्मसात्कृतानि । रामे परावरे दृष्टे जटायुषः कर्माण्यक्षीयन्त । 'गच्छ लोकाननुत्तमान्' इति रामसमनुज्ञानेन 'यदतः परो दिवो ज्योतिर्दीप्यते अनुत्तमेषु वाव लोकेषु' इति ज्योतिरधिकरणविषयश्रुतिवाक्योक्ताः ज्योतिर्मयाः तमोऽनीताः मुक्तप्राप्याः लोकाः विवक्षिताः । यद्यपि पितृत्वाभिमतपित्रानाप्तसाक्षात्संस्कारभाक् गृध्रराज-

गृध्रं निहतं दृष्ट्वा – अत्यल्पावशिष्टप्राणो निहतप्रायः निहत इत्युच्यते । "तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः । ददर्श भूमौ पतितं समीपे राघवाश्रमात् । सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् । गृध्रराजं विनिहतं विललाप सुदुःखिता" इत्यल्पावशिष्टप्राणे विनिहतशब्दः प्रयोक्ष्यते । मरणस्य सद्योभावित्वात् तथा व्यवहारः । अस्मदर्थे त्यक्तजीवितोऽयमिति सीतारामलक्ष्मणानां शोकतापः । दशरथवयस्येऽस्मिन् प्रवयसि वयसि पितृत्वाभिमानो दाशरथेः । अस्य च रामे पुत्रत्वबुद्धिः सीतायां च स्नुषात्वबुद्धिः । "निपपात हतो गृध्रः धरण्यामल्पजीवितः । तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् । अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता" इति सीतायाः अस्मिन् बन्धुत्वबुद्धिः, द्रुमपक्षिमृगसामान्येष्वपि बन्धुत्वबुद्धिरेतस्याः किं पुनर्दशरथचिरवयस्ये स्वाश्रमपालके स्वकृते दशमुखमपि प्रतिरुध्य भृशं विक्रम्य प्राणत्यागं कृतवति । "धावन्ति नूनं काकुत्स्थं मदर्थं मृगपक्षिणः । अयं हि कृपया राम मां त्रातुमपि संगतः । शेते विनिहतो भूमौ ममाऽभाग्याद्विहंगमः ।" इति सीतया मृगपक्षिणां सामान्यतो बन्धुभावः अस्मिन् विशेषश्च उक्तः । प्राणवियोगकतिपयक्षणपूर्वं अस्य सीतारूपेश्वरीपरिष्वंगः रामरूपेश्वरपरिष्वंगः तदुभयोरतिस्निग्धकरुणवीक्षणं च समभवत् । "प्राज्ञेनाऽत्मना सम्परिष्वक्तः उत्सर्जन् याति" इति श्रूयते । एतद्विषये सा- श्रुतिः प्रत्यक्षीक्रियते । म्रियमाणाः बन्धवः परिष्वज्येरन् विलप्येरन् संस्करिष्येरंश्च बन्धुजनैः । ईश्वरमिथुनेन पर्यायेण साक्षात् सर्वसाक्षिकं परिष्वक्तः अयं मुक्तिं प्राप । निहतगृध्रदर्शनं मैथिल्या अपि वृत्तम् हननस्य तत्समक्षवृत्तत्वात् । विलपनहेतोस्सीताया अपि तुल्यत्वात् 'गृध्रं हत्वा जटायुष' मित्युक्तम् । तदनन्तरश्लोकेऽस्मिन् 'गृध्रं च निहतं दृष्ट्वा राघवो विललाप' इति वचनेन सीताया अपि गृध्रवधजन्मविलपनमर्थात्सूचितं भवति । 'हृतां श्रुत्वा च मैथिलीम्' इति राघवविषये शोकहेत्वन्तरमुच्यते । चकारद्वयेनोभयोर्हेत्वोस्समुच्चयं यौग-

पदं च द्योत्यते। हतं श्रुत्वा इति श्रवणं गृध्रमुखादिति अर्थाल्लभ्यते। वक्त्रन्तराऽनिर्देशात् श्रुत्वा च इति गृध्रमुखाच्छ्रवणहेतुसूचनेन निहतमित्यस्य अल्पावशिष्टजीवार्थकत्वं व्यज्यते। जटायुदर्शनात्पूर्वमेव सीतान्वेषणमारब्धम्। सीतामन्विष्यति भगवान्। तस्य तद्विषयतत्त्वश्रावकोऽयं जटायुः। तां लंकाऽशोकवनिकास्थितां दृष्ट्वा तत्तदमुपदेक्ष्यति हनूमतेऽस्य ज्येष्ठभ्राता संपातिः। जटायुमुखात् श्रवणं सीतान्वेषिणो रामस्य, संपातिमुखात् श्रवणं सीतान्वेषिणो हनूमतः। अस्मिन् श्लोके दर्शनश्रवणयोर्न श्रुतिप्रसिद्धभेदो विवक्ष्यते। सीताविषयश्रवणमात्रमधुना। श्रुत्वा जटायुषो वाक्यमिति कविना वक्ष्यते। तद्दर्शनं कृच्छ्रसाध्यम्। चकारद्वयेन शोकहेतुसमुच्चायकेन शोकस्य द्विगुणीकृतत्वं द्योत्यते। 'द्विगुणीकृततापार्तः' इतीदं वक्ष्यते काव्ये॥

(मू) ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम्।
मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह॥ 54
कबन्धं नाम रूपेण विकृतं घोरदर्शनम्॥ 55

**तेनैव शोकेन** इति पूर्वोक्तशोकहेतुभूतविषयद्वयं परामृश्यते। अथवा निहतगृध्रदर्शनजनितशोकमात्रं वा। 'सीताहरणजं दुःखं न मे सौम्य तथा गतम्। यथा विनाशो गृध्रस्य मत्कृते च परन्तप॥' इति गृध्रवधस्याधिकदुःखत्वं वक्ष्यते रामेण। जटायुदहने शोकरूपज्ञानाग्निरेवानुरूपाग्निरिति व्यज्यते 'शोकेनैव दग्ध्वा' इति सावधारणोक्त्या। व्याजमात्रं प्राकृताग्निः। जटायुषो राघवकरुणाज्योतिषा सर्वपूर्वकर्माणि भस्मसात्कृतानि। रामे परावरे दृष्टे जटायुषः कर्माण्यक्षीयन्त। 'गच्छ लोकाननुत्तमान्' इति रामसमनुज्ञानेन 'यदतः परो दिवो ज्योतिर्दीप्यते अनुत्तमेषु वाव लोकेषु' इति ज्योतिरधिकरणविषयश्रुतिवाक्योक्ताः ज्योतिर्मयाः तमोऽतीताः मुक्तप्राप्याः लोकाः विवक्षिताः। यद्यपि पितृत्वाभिमतपित्रानाप्तसाक्षात्संस्कारभाक् गृध्रराज-

एतद्दर्शनस्य कथनेन, समित्युपसर्गेण सन्दर्शनस्यकथनेन, 'ह' इत्याश्चर्यद्योतनेन च। कबन्ध नाम— यद्यप्यस्य कबन्धसंज्ञा, नायमेकान्तेन कबन्ध, किन्तु कबन्धसदृश । अस्य शिर उरसि निमग्न। इद च व्यज्यते कबन्धं नाम रूपेण विकृतम् इत्यनेन । "त्वं तु को वा किमर्थं वा कबन्धसदृशो वने । आस्येनोरसि दीप्तेन भग्नसक्थो विनेदसे" इति लक्ष्मणेन पृच्छ्यते । कबन्धमिव इति च वर्ण्यते । यद्यप्ययमशिरोदर्शन अस्य दर्शनं सन्दर्शनमेव ॥

(मू) त निहत्य महाबाहुः ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ 56

श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् । 57

त निहत्य महाबाहुर्ददाह । मामवटे निक्षिप्य दह इति राम प्रार्थनेऽनेन । रामदग्धो जटायुर्मोक्ष प्राप । अपरवर्तिनामनुत्तमान् लोकान् प्राप स्वेन रूपेणाभिनिष्पन्न । अय कबन्धो रामदग्ध स्वीयं पूर्वदिव्यस्वर्गिरूपं प्राप्य स्वर्गमगमत् । स्वर्गगमनमात्रमैच्छत् । जटायुस्तु कमपि लोक न प्रार्थयामास । केवलरामेच्छया अनुत्तममोक्षपदवीमपुनरावर्तिनीं सम्प्राप । महाबाहुः— इत्यत्र कबन्धबाहुच्छेत्तृविशेषण साभिप्रायम् । 'स शक्रो बाहुयोजनमायतौ । प्रादादास्य च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् । सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् । सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः" इति कबन्ध योजनायतसर्वसत्त्वसंग्राहकमहाबाहु । तस्य बाहुच्छेद कृतो महाबाहुना रामेण । कबन्धबाह्वपेक्षयापि अय महत्तरबाहु । यद्यपि लक्ष्मण एकबाहुं चिच्छेद तस्य रामदक्षिणबाहुत्वात् न तस्यात्र पृथक् कीर्तन इत्यनेन । अथवाग्निसंस्करणे तस्य प्रथमं भयार्तत्वात् तस्यात्र महाबाहुत्वकीर्तनं न क्रियते । अत्र गुणैर्भावो व्यज्यते कविना स तु माम-

दहनसंस्कारे सीतासाहचर्यमावश्यकं, तत्सहभावस्य दुर्लभत्वात् रामहृदये सा सन्निहितैवाभवत्। अतस्तत्साहचर्यमपि कथंचित्संपादितं उभयशोकहेतु-समुच्चयेन। जटायुनामकीर्तनेन तस्य सुपर्णमातृविनतासुतत्वं द्योत्यते। "सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः। शूराः शरण्याः सौमित्रे तिर्यग्योनि-गतेष्वपि" इति रामेणास्य साधुशब्दव्यपदेश्यत्वम्। साधूनां परित्राणं स्वावतारमुख्यप्रयोजनम्। यद्यपि सर्वबन्धेभ्यो मोक्ष्यमाणस्य रामानुग्रहेण ब्रह्म-सम्पन्नस्य जटायुषः शव्यकरणेन न कोपि लाभः, तथापि तत्संस्करणेन संस्कर्तुरेव श्रेयो लाभः तदनुत्तमदाक्षिण्यप्रकाशनेन। 'महर्षिकल्पेन च संस्कृतः' इत्यस्य रामकृतसंस्कारो वर्ण्यते। महर्षिकल्पेन—राजपुत्रत्वेऽपि तापसव्रतेन रामेण, महर्षीणां यः प्रोक्तः संस्कारकल्पः तद्विधिना संस्कृत इत्यर्थद्वयं विवक्षितम्। स्वयं शोकेन दह्यमान एव गृध्रराजदेहं ददाह। जटायुनामावृत्त्या गृध्रपदावृत्त्या च जटायुषो भाग्यं रामदाक्षिण्यं च विस्मयावहमिति व्यज्यते। सुदीर्घायुषो जटायुषः आयु सीतारामार्थं अन्तं प्राप। सुदीर्घायुषा म्रियमाणेन जटायुषा रामस्य 'आयुष्मन्' इति संबोधनेन दीर्घायुष्यत्वमाशिष्टम्। सीतासंयोगश्चाचिरभावित्वेनाशिष्टः "न च त्वया कार्या जनकस्य सुतां प्रति। वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे" इति। 'गृध्रं जटायुषं दग्ध्वा वने सीतां मृगयन् कबन्धं नाम रूपेण विकृतं घोरदर्शनं राक्षसं सन्ददर्श ह'। दशशिरा रावणो दिदृक्ष्यते तद्वधाय, शिरोहीनः कबन्धो घोरदर्शनो दृष्टिपथं याति। जटायुषं संस्कृत्य तद्विषये कृतकृत्यतां संपाद्य तद्विषयान्मन आकृष्य सीतान्वेषणे एकाग्रमना अभवदिति व्यज्यते **मार्गमाणो वने सीताम्** इत्यनन्तरोक्त्या। कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः। 'प्रवेश्य सीताधिगमे ततो मनः वनं सुरेन्द्राविव विष्णुवासवौ' इति काव्यश्लोकेनेदं व्यक्तीकृतम्। सीतान्वेषण-रूपे कार्ये एतद्दर्शनस्योपकारकत्वमस्त्येवेति द्योत्यते सीतान्वेषणमध्ये

एतद्दर्शनस्य कथनेन, समित्युपसर्गेण सन्दर्शनत्वकथनेन, 'ह' इत्याश्चर्यद्योतनेन च। कबन्धं नाम— यद्यप्यस्य कबन्धसंज्ञा, नायमेकान्तेन कबन्धः, किन्तु कबन्धसदृशः। अस्य शिरः उरसि क्षिप्तम्। इदं च व्यज्यते कबन्धं नाम रूपेण विकृतम् इत्यनेन। "त्वं तु को वा किमर्थं वा कबन्धसदृशो वने। आस्येनोरसि दीप्तेन भग्नजङ्घो विवेष्टसे" इति लक्ष्मणेन पृच्छ्यते। कबन्धमिव इति च वर्ण्यते। यद्यप्ययमतिघोरदर्शनः अस्य दर्शनं सन्दर्शनमेव॥

(मू) तं निहत्य महाबाहुः ददाह स्वर्गतश्च सः।
स चास्य कथयामास शबरीं धर्मचारिणीम्॥ 56

श्रमणीं धर्मनिपुणामभिगच्छेति राघवम्। 57

तं निहत्य महाबाहुर्ददाह। मामवटे निक्षिप्य दह इति रामः प्रार्थ्यतेऽनेन। रामदग्धो जटायुर्मोक्षं प्राप। अपरवर्तिनामनुत्तमान् लोकान् प्राप स्वेन रूपेणाभिनिष्पन्नः। अयं कबन्धो रामदग्धः स्वीयं पूर्वदिव्यस्वर्गिरूपं प्राप्य स्वर्गमगमत्। स्वर्गगमनमात्रमैच्छत्। जटायुस्तु कमपि लोकं न प्रार्थयामास। केवलरामेच्छया अनुत्तममोक्षपदवीमपुनरावर्तिनीं संप्राप। महाबाहुः— इत्यत्र कबन्धबाहुच्छेत्तृविशेषणं साभिप्रायम्। 'मे शक्रो बाहुयोजनमायतौ। प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत्। सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान्। सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः' इति कबन्धः योजनायतसर्वसत्त्वसंग्राहकमहाबाहुः। तस्य बाहुच्छेदः कृतो महाबाहुना रामेण। कबन्धबाह्वपेक्षयापि अयं महत्तरबाहुः। यद्यपि लक्ष्मणः एकबाहुं चिच्छेद तस्य रामदक्षिणबाहुत्वात् न तस्यात्र पृथक् कीर्तनं हन्तृत्वेन। अथवास्मिन्प्रकरणे तस्य प्रथमं भयार्तत्वात् तस्यात्र महाबाहुत्वकीर्तनं न क्रियते। अत्र गुरोर्भावो व्यज्यते कविना स तु माम-

'ब्रवीदिन्द्रो यदा रामः सलक्ष्मणः। छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि' इति इन्द्रवचने रामः सलक्ष्मणः इति निर्देशेन। ददाह स्वर्गतश्च सः— रामेण यस्य देहो दह्यते स स्वर्गिदिव्यदेहं प्राप्य स्वर्गतो भवति। स इति पदेन यो दग्धः सः सुगतिं स्वर्गतिं प्राप्नोत्। कोऽयं रामकरुणा-महिमेति व्यज्यते। निहत्य ददाह इत्यत्र द्वैधार्थोऽभिप्रेयते। मुखं व्यादाय स्वपितीत्यत्रेव समानकालिकत्वं हननदहनयोः। अस्य बाहुच्छेदेऽपि नायं मृतः। चितायां दह्यमानं कबन्धशरीरं मृत्पिण्डोपमम् इति वर्ण्यते। निहत्येति पदेन बाहुनिहननमात्रं वा ग्राह्यम्। यद्यपि स्वर्गं गच्छता कबन्धेन सुग्रीववृत्तान्तः तत्सख्यकरणं च विस्तरशः कथितं अत्र संक्षेपे शबर्याश्रमगमनमात्रोपदेशकथनेन तस्यैव प्राधान्यमिति व्यज्यते। सुग्रीव-सख्यं स्वप्रयोजनार्थम्। शबर्याश्रमगमनं तु तदिच्छापूरणार्थम्। सीतान्वेषणे क उपकुर्यादिति लक्ष्मणपृष्टः कबन्धः सुग्रीवं प्रास्तावीत्। अपृष्ट एव स्वयं शबर्यभिगमनमुपदिदेश। चरमकथितमिममुपदेशमेव प्रथमं रामोऽन्वतिष्ठत्। अनन्तरमेव सुग्रीवसमीपमगच्छत्। पंपायाः पश्चिमभागे शबर्याश्रमः। प्राग्भागे सुग्रीवस्थानभूतो ऋश्यमूकः। पंपां प्रदक्षिणीकृत्य सुदूरस्थितोऽपि शबर्याश्रमः प्रथमं गम्यते। सीतान्वेषणत्वरावानपि शबर्याश्रममेव प्रथमं गच्छति रामस्तस्याश्चिरमनोरथं पूरयितुम्। सीतातोऽपि शबर्यामुत्कर्षबुद्धिः। शबर्याश्रमगमनरूपविलम्बादिकं न गण्यतेऽस्मिन् सीतान्वेषणावसरेऽपि। स च—स्वर्गगमनमार्गमध्यस्थ एव। अस्य—सीतान्वेषणतत्परस्य। शबरीं—प्रतिलोमस्त्रियं। जात्या शबरीमिति सर्वे व्याख्यातारः। शबरीमिति जातित एव निर्देशस्तस्याः जातितः अत्यन्तनिकर्षद्योतनेन राघवस्य सौशील्य-काष्ठाभिव्यञ्जनाय। 'निषादानां नेता कपिकुलपतिः कापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति। अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैस्त्रोतोभिः प्रसभमनुकम्पे समयसि'। निर्दोषं समं ब्रह्म निम्नान् स्वात्मना

समत्वेन भावयित्वा तैस्सह नीरन्ध्रं संश्लिष्यति। कश्चित् यक्षः इत्यनिर्दिष्ट-नामकयक्षनिर्देशवत्। **धर्मचारिणीं** भवतु सा जातितः शबरी किं तेन। सर्वोत्तमधर्मचरणशीला सा। आचार्योपासनं चोत्तमो धर्मः। 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति गीतं भगवता। स्वकर्मणा भगवदर्चनधर्मेण सिद्धिरिति। 'तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः' इति मुण्डकश्रुतिः ब्रह्मज्ञाचार्यार्चनस्य मोक्षरूपभूति-हेतुत्वे प्रसिद्धिं निजगाद। लिङ्गा च तदर्चनां व्यधत्त सिद्ध्युपायत्वेन। **श्रमणीं**— सर्वसंगपरित्यागिनीं चतुर्थाश्रमवेषधराम्। 'अस्तेयाद्यैः स्वजातेः परिचरणमुखैरप्यधीतैः स्वजातेः सर्वैपि प्राप्नुयुस्तां परगतिमिति तु ब्राह्म-गीतादिसिद्धम्' इति तत्त्वमुक्ताकलापोक्तमिह भाव्यम्। अस्तेयाद्याः सर्वसामान्यधर्माः। आचार्यपरिचरणधर्मश्च साधारणः। तस्य सर्वोत्तमधर्मत्वात् सिद्धिसाधने निःसंशयत्वात् तद्धर्मावलम्बिनो निपुणा इति व्यज्यते **धर्मनिपुणा-मिति**। "सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्। न संशयोऽत्र तद्भक्त-परिचर्यारतात्मनाम्' इति स्मर्यते। 'इतस्ते दिवमारूढाः यानहं पर्यचारिषम्' 'मुनीनामाश्रमो येषामहं च परिचारिणी' इति शबर्या आचार्यपरिचर्या स्वां-चरितेति कथ्यते। 'अहं चे' ति स्वस्य निहीनता द्योत्यते आचार्यकरुणानिरवधि-कत्वव्यञ्जनाय। 'कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि' इति रामेण शबर्याचरितः उत्तमधर्मः निर्दिश्यते। श्रमण्याश्चात्माप्तित्वं चिरगुरुपरिचर्या-सिद्धम्। तदाचार्यमुन्याश्रमः शबर्या आश्रम इति व्यपदिश्यते। श्रमण्या वासस्थानमाश्रमः। सैव नियुक्ता गुरुभिः चिरकालानन्तराभ्यागन्तृरामस्य आतिथ्यं कर्तुम्। 'रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता' इति सा रामा-गमनात्पूर्वमेव सिद्धाऽभवदिति स्पष्टमुच्यते। कथं सा सिद्धाऽभवदिति पृष्टे उच्यते—सिद्धसंमत्या—आचार्याभिमत्येति। आत्मज्ञार्चनविधायकमुण्डक-श्रुतिरेतेन शबरीवृत्तान्तवर्णनेनोपबृंह्यते। शंबूकः स्वानधिकृततपः स्वयं तेपे।

अस्यास्तपोधर्मस्तु निरन्तराचार्यपरिचर्या । तस्मादस्यास्तपसो न दोषता ॥

(मू) सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ।
शबर्या पूजितस्सम्यक् रामो दशरथात्मजः ॥ 57

'सर्वदाऽभिगतस्सद्भिः समुद्र इव सिन्धुभिः' इति अस्य सद्भिस्सदाऽभिगम्यत्वं भणितम् । अभिगमनमिति पूज्यविषये व्यवह्रियते । सद्भिरप्यभिगम्यो राम तां शबरीमभ्यगच्छत् । कबन्धोऽपि 'श्रमणीमभिगच्छ' इत्युवाच ।

शत्रुसूदनः सः शबरीमभ्यगच्छत्— शत्रुसूदनोद्योगस्यातित्वरया कर्तव्यत्वनिर्बन्धसद्भावेपि इमां शबरीमभ्यगच्छत् । शबर्यातिथ्यप्रतिग्रहानन्तरं सीतान्वेषणकार्ये व्यग्रोऽभवत् । पूज्यपूजकयोरन्तरं व्यज्यते 'दशरथात्मजः इति पूज्यरामवर्णनेन, शबर्या इति पूजिकाया जात्या निर्देशेन च । संक्षेपेपीदं मुख्यतया सम्यक् कीर्त्यते । सम्यक्— सम्यक्त्वं च पादग्रहणपाद्यानमनादिसमर्पणेन । 'रामस्य पादौ जग्राह' 'पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि' 'मया तु विविधं वन्यं संचितं पुरुषर्षभ । तवार्थे पुरुषव्याघ्र पम्पायास्तीरसम्भवम्' इत्यादिवर्णनं भाव्यम् । यद्यपि पूर्वमेवाचार्यपरिचर्यया सा सिद्धिं प्राप्ता निर्ग्रन्था मोक्षसिद्ध्यपेक्षां विनापि केवलं भक्त्या राममपूजयत् आचार्यनियोगेन स्वयं प्रयोजनत्वेन च । इदमपि पूजायाः सम्यक्त्वम् । मोक्षसिद्धप्रतिबन्धकं कलेवरं रामस्य पुरतः अग्नौ प्रक्षिप्य तत्याज । 'अन्तकालेऽपि मामेव स्मरन् त्यक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥' इति गीते भगवता । अस्या विषये 'स्मरन्' इत्यस्य स्थाने पश्यन् इति पठितव्यम् । 'पश्यन्ती' इति वा । रामः— रमयतां श्रेष्ठः ॥

पम्पातीरे हनुमता संगतो वानरेण ह ।
हनूमद्वचनाच्चैव सुग्रीवेण समागतः ॥ 58

शबर्यानन्दनफलमिव हनुमत्समागमः । इदं व्यज्यते 'शबर्या पूजितः पम्पातीर एव हनूमता संगतः' इति वर्णनेन । हनुमत्संगतिफलं सुग्रीवसख्यम् । इत्थं चोत्तरोत्तरकल्याणपरम्परागतिरुच्यते । 'राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः । ईदृशीयं ममाऽलक्ष्मीर्निर्दहेदपि पावकम्' इति नैराश्यमवलम्बितं पूर्वम् । शबर्यातिथ्यप्रतिग्रहानन्तरं पम्पातीर एव वक्ष्यते रामेण 'नष्टमशुभं तत्कल्याणं समुपस्थितम् । तेन तत्त्वेन हृष्टं मे मनो लक्ष्मण सम्प्रति । हृदये हि नरव्याघ्र शुभमाविर्भविष्यति । तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम्' इति । तद्व्यज्यतेऽत्र कल्याणपरम्पराप्राप्त्युत्तरोत्तरपठनेन । अत्र शबरीशब्दः त्रिः पठ्यते नारदेन । 'एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् । राघवः प्राह' इतीयं रीतिरनुस्रियते काव्ये । शबर्या उक्तयोऽपि पूजारूपाः ।

पम्पातीरे — अनेन पदेन किष्किन्धाकाण्डप्रारंभः सूच्यते । 'ददर्श पम्पां शुभदर्शकाननां अनेकनानाविधपक्षिजालकाम्' इत्यारण्यकाण्डोपसंहारः । 'स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम्' इति च किष्किन्धाकाण्डारंभः । पम्पातीरवर्णकः प्रथमसर्गः । रामस्य हनुमता संगमः गङ्गायमुनयोस्संगम इवेति व्यज्यते संगतशब्देन । शबरी वनमानुषी । अयं वानरः । 'हनूमता' इति हनुमन्नाम्नैव हनूमतः प्रभावो व्यज्यते । ह इति गुरोर्विस्मयः । हनुमत्समागमानन्तरमेव सर्वाभ्युदयप्राप्तिः । हनुमद्वचनाच्चैवकबन्धवचनात् हनूमद्वचनाच्च । सर्वकार्येषु इतरवचनादेव रामः प्रवर्तते । अगस्त्यवचनात् ऐन्द्रं शरासनं जग्राह । 'हनूमद्वचनाच्चैव' इत्यत्र चकारेण दाहनस्यापि समुच्चयो द्योत्यते हनूमद्वचनात् हनूमद्दहनात् च । 'ततो महद्वर्म

सुदूरसंक्रमः क्रमेण गत्वा प्रतिकूल्यन्वनम्' इति भृशं सुदूराटनपरिश्रान्तौ राघवौ। हनूमद्रूपवद्धनलाभो महालाभस्तयोः। हनूमद्वचनाचेति हनूमतोऽद्भुतभाषणं च सूच्यते। हनूमद्वचने विस्तरतोऽद्भुतशुद्धिसौष्ठवादिगुणाः रामेणैव वर्णिताः॥

सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः।
आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः॥ 59

यद्यपि महाबलत्वेन रावणयुद्धे सहायापेक्षाऽस्य न स्यात्, तथापि सीतान्वेषणाय तत्सहायापेक्षास्त्येवेति व्यज्यते महाबलः इत्यनेन। रामस्य महाबलत्वं नान्वेषणोपयोगि। जन्मन आरभ्य सर्ववृत्तान्तकथनापेक्षया सीतायाः तत् रावणहृतत्वादिकं वृत्तं तदन्वेषणस्यावश्यकर्तव्यतया विशेषेणाकथयदित्युच्यते सीतायाश्च विशेषतः इति॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः।
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्॥ 60

'वानराणां नराणां च कथमासीत्समागमः' इति सीतया साश्चर्यं पृच्छयते। 'रामसुग्रीवयोरैक्यं देव्येवं समजायत' इति हनूमता वानरस्य स्वस्य सीतादेव्या आश्चर्यभूतसमागम इव रामसुग्रीवयोरपि समागमोऽभवत् इति एवंशब्देनोच्यते साभिनयम्। सख्यं चात्र अग्निसाक्षिकं भवति। सुग्रीवेण सख्यकरणं कबन्धेन सीतान्वेषणे एकोपायत्वेन कथितम्। भास्करस्य औरसः पुत्रः सुग्रीवः इति तत्सख्यस्यौचित्यं च सूचितम्। मिथोबद्धवैरभ्रात्रोर्मध्ये सुग्रीवस्य सहायवरणमेव कर्तव्यमिति स्पष्टं कथितं दिव्यज्ञानवता देवसंपन्नेन। 'कुरु राघव सत्येन वयस्यं वनचारिणम्' इति तदुपदेशः। सत्येन वयस्य करणं च सख्यस्याऽग्निसाक्षिकत्वेन भवति। अत्राग्निसाक्षिकं रामसुग्रीवसख्य-

करणं निर्दिश्यते । रामसहायार्थमेवेन्द्रेण स्वांशत्वेन स्वपुत्रत्वेनोत्पादितस्य वालिनः पूर्वमेव रामशत्रुणा रामसंहार्येण सीतापहारकरावणेनाग्निसाक्षिकं सख्यं निर्वर्तितमिति सूच्यते । 'सोहं दृष्टबलस्तुभ्यमिच्छामि हरिपुंगव । त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः । दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् । सर्वमेवाविभक्तं नो भविष्यति हरीश्वर' इति वालि-गृहीतमुक्तेन रावणेन पावकस्य पुरतः दीर्घसख्यप्रतिज्ञानं प्रार्थितम् । यद्यपि वाली रामसहायार्थमेव ब्रह्मनियोगेन महेन्द्रेण वानरयोनावुत्पादितः रामजनेः पूर्वमेव, यद्यपि वालिने महद्बलं दत्तं तदर्थमेव, अयं स्वधर्षितेन स्वजितेन रावणेन अग्निसाक्षिकं सख्यमकरोत् तत्प्रार्थनक्षण एवेति सविस्मयं वर्ण्यते उत्तरकाण्डपञ्चत्रिंशे अगस्त्येन 'एवमेतत्पुरावृत्तं वालिना रावणः प्रभो । धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ' इति । स्वधर्षितेन भविष्यता राम-शत्रुणा राममार्यापहारकेण किमर्थमयमग्निसाक्षिकं सख्यं चकार तं च भ्रातृ-त्वेन भावयामासेत्यगस्त्यस्य विस्मयः । बालकाण्डसप्तदशे रामसहायार्थं देवैः ऋक्षवानरपुत्रोत्पादनं वर्णितम् । अनन्तरसर्गे रामावतारो वर्णितः । 'बभूव भू-र्भीमशरीररूपैः समावृता रामसहायहेतोः' इति सप्तदशसर्गोपसंहारः । 'विष्णोः सहायान्बलिनः सृजध्वं कामरूपिणः । सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्र-मान्' इति ब्रह्मणाऽऽदिश्यन्ते देवाः । 'वानरेन्द्रं महेन्द्राभमिन्द्रो वालिन-मूर्जितम् । सुग्रीवं जनयामास तपनस्तपतां वरः' इत्येकस्यां वानर्यामिन्द्र-सूर्याभ्यामुत्पादितावितौ भ्रातरौ । 'सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् । भ्रातरावुपतस्थुस्ते सर्वे ते हरियूथपाः । तांश्च सर्वान्महाबाहुर्वाली विपुल-विक्रमः । जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान्' इति भविष्यति अपहृत-सीतान्वेषणे रामरावणयुद्धे च रामसहायार्थमेव रामपक्षे प्रधानसहायत्वेनैव वालिने सुमहद्बलादिकं दत्तं महेन्द्रेण । स्वपितृभूतेन्द्रशत्रू रावणः । इन्द्रं जित्वा बबन्ध रावणपुत्रः इन्द्रजित् । स्वपितुः इन्द्रस्य पालनार्थमेव रामः

अवतारितः रावणवधार्थिभिः। रामसेनाधिपत्यकरणार्थमेव सृष्टस्य तदर्थमेव देवैः अनुगृहीतसुमहद्बलस्य वालिनः प्रतिपक्षिणा सहाग्निसाक्षिकं चिराय सख्यं प्रतिज्ञाय भ्रात्रीकृतो देवशत्रुः। देवद्रोग्धा पितृद्रोग्धा स्वस्वामिभूतरामद्रोग्धा स्वसुहृत्तमोऽभवत्। किष्किन्धा प्रान्तभागेष्वेव भृशमुच्चैः क्रन्दन्तीं सीतामपजहार रावणः। नेदमविदितः स्याद्वालिनः। ऋश्यमूकप्रान्ते रामलक्ष्मणागमनादिकं तयोः सीतान्वेषणोद्योगादिकं च कथं वाऽविदितं भवेत्। विदन्नपि रावणपक्षपात्येवासीत्। वानरसेना रामसेना। येन रामसेनाधिपत्याधिकारो निर्वाह्यः स एव रामपरिपन्थी रामशत्रुणा पावकपुरतः बद्धसख्योऽभवत्। सेनान्येन तस्य सद्योवधो न्याय्य एव दण्डः। सेनाधिपत्यानधिकृतोपि दण्डार्हः किमुत तदधिकृतः शत्रुपक्षपाती। नानेन युद्धकरणस्य युद्धे पातनस्य वा निर्बन्धः। सर्वलोकप्रसिद्धेन सेनान्येन शीर्षच्छेद्य एव सैनिकाधिकारं परित्यज्य ततो भ्रष्टः। इदं व्यञ्जयितुमेव रामावतारसर्गपूर्वसर्गे एव वालिनः महाबलसम्पत्त्या रावणशत्रुणेन्द्रेण स्वपुत्रत्वेन सृष्टत्वं वर्णितम्। देवा मानुषरूपेण चरन्त्येते महीतले' इति रामप्रतिवचनेन यतस्त्वं देवैः रावणवधार्थं मत्सहायार्थमुत्पादितः त्वदधिकारं कृतघ्नतया अत्यजः अरिपक्षं प्राविशः अहं च त्वत्पितृप्रार्थनया रावणवधार्थं मानुषरूपेण चरामि इति वालिनः सद्योवध्यत्वे हेतुर्व्यञ्जितः। वालिनः प्रतिपक्षप्रविष्टत्वादेव कबन्धेन सुग्रीवसख्यमेवोपादिश्यत। सुग्रीवसख्यकरणे 'सीताकपीन्द्रक्षणदाचराणां वामानि नेत्राणि समं स्फुरन्ति' इति श्लोकेन कपीन्द्ररावणयोः सखित्वं रामपक्षविरुद्धत्वं च व्यञ्जितं तयोः सहपठनेन। कपीन्द्रशब्देन इन्द्रपुत्रत्वेऽपि इन्द्रशत्रुणा बद्धसख्यं इति व्यज्यते। स्वस्य स्वभ्रात्रा सुग्रीवेण सह रामकैङ्कर्यसाम्राज्ये वा कपिराज्यभोगे वा सहत्वमार्ग्यं न लब्धमिति व्यज्यते 'युगपद्विहितं तात न मन्ये सुखमावयोः। सौहार्दं भ्रातृयुक्तं हि तदिदं तात नान्यथा' इति सुग्रीवं प्रति वालिवचनेन। स्वस्य स्वपित्रादिदेवैः विश्वस्रष्ट्रा ब्रह्मणा च सीतान्वेषणरावणयुद्धादिषु

च नियमितं रामसहायभूतवानरसेनानायकत्वाधिकारं स्वबुद्धिमोहात् परित्यज्य शत्रुपक्षानुकूल्यं च स्वेनावलम्बितमित्यनुतप्य स्वकृतं रामसाहाय्यं स्वपुत्रेणाङ्गदेन स्वात्मभूतेन, स्वभ्रात्रा सुग्रीवेण च कार्यमित्यनुशशास "राघवस्य च ते कार्यं कर्तव्यमविशङ्कया । स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः । एष तारात्मजः श्रीमान् त्वया तुल्यपराक्रमः । रक्षसां तु वधे तेषामग्रतस्ते भविष्यति" इति । "कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात्" इति वदता स्वस्य स्वनियतरामैकैकार्याधिकाराद्भ्रंशः आपतितः, रामैकैकार्यार्थमेव स्वेन सह सृष्टेन स्वभ्रात्रा सुग्रीवेण वैरं कृतं, रामप्रतिपक्षिणा स्वपितृशत्रुणा रावणेनाग्निसाक्षिकं सख्यं बद्धं, तस्मिन् भ्रातृत्वबुद्धिश्च निवेशिता इति स्वानुतापोऽभिव्यञ्जितः । स्यादधर्मो राघवकार्याकरणे इति वदता स्वनियतस्वकार्याकरणे स्ववधरूपदण्डपातो न्याय्य एवेति स्वाभिप्रायो व्यञ्जितः । "त्वया ह्यनुगृहीतेन राज्यं शक्यमुपासितुम् । त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना । शक्यं दिवं चार्जयितुं वसुधां चापि शासितुम् । त्वत्तोऽहं वधमाकांक्षन् वार्यमाणोऽपि तारया । सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः" इति, रामप्रतिवचनानन्तरं वालिनोक्तं भाव्यम् । त्वद्वशे वर्तनमेव मम जन्मनियतम् । त्वत्किङ्करभावः त्वदनुग्रहो मया कांक्षणीयः । जन्मनियतमद्धर्मः त्वत्साहाय्यकरणरूपो मया परित्यक्तः । मद्धर्मभूतत्द्धर्मे यद्यप्यहं प्रतिबोधितस्तारया मत्पुत्राङ्गदवाक्यमनुवदन्त्या, पूर्वं मया रावणाय दत्तं सख्यप्रतिज्ञोल्लंघनरूपादसत्याद्बिभ्यन् जन्मनियतमत्पितृनियतकर्मभूतत्वत्सेनानायकं कर्मानुष्ठातुमशक्नुवानः त्वदादेशत्वदनुकूलाकरणप्रयुक्तमहापराधस्य स्वामिना त्वया वधरूपदण्डेनैव शुद्धिं प्राप्नुयामिति जानन् त्वद्बाणनिहतः त्वद्दर्शनत्वत्कटाक्षादिकमनुभवन् त्वत्तः सर्वपापेभ्योऽभयं च लब्ध्वा मोक्षं प्राप्तुमिच्छन् सुग्रीवसन्धित्वत्सेवाकरणविषयमदासतमतारोपदेशं वचनं परित्यज्य भ्रात्रा द्वन्द्वयुद्धेऽवातरम् । यदि बुद्धिमोहात् मन्नियतधर्मं परित्यज्य रावणेन सख्यं पूर्वं नाकरिष्यत, तदा

तारोपदेश एव मया अंग्यकरिष्यत । नक्षत्ररूपतारावशो भूत्वा प्रियभार्या-तारावशगो नाऽभवम् । 'न हि तारामतं किञ्चिदन्यथा परिवर्तयेत्' इत्यस्य वचनं ताराद्वयेऽपि सत्यम् । 'इदं महेन्द्रोपममीमविक्रमप्रसादितस्त्वं क्षम मे नरेश्वर' इति राघवक्षमाप्रार्थने 'महेन्द्रोपम' इति रामस्य पितृतुल्यत्वं द्योतयति । 'तद्भवान् दण्डसंयोगादस्माद्विगतकिल्बिषः । गतः स्वां प्रकृतिं धर्म्यां धर्मदृष्टेन वर्त्मना' इति राघववचनेन वधदण्डेनास्य किल्बिषक्षयः, स्वप्रकृतिभूतस्वशुद्धात्मस्वरूपाविर्भावरूपमोक्षश्च भवतीति स्पष्टीक्रियते । विभीषणविषयाऽभयप्रदानश्लोके, भयनिवृत्तिदानं प्रतिज्ञातं "अभयं सर्वभूतेभ्यो ददामि" इति । इन्द्रकुमारार्जुनाद्याभयप्रदानश्लोके "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति शोकनिवृत्तिदानं प्रतिज्ञातम् । अत्रेन्द्रकुमार-वालिविषये "त्यज शोकं च मोहं च भयं च हृदये स्थितम्" इति शोकमोहभये-भ्योऽभयं दत्तम् । सुग्रीवाय किष्किन्धाराज्यं दत्तं, वालिने तु मोक्षसाम्राज्यं दत्तम् । रावणेन निहतो गृध्रराजः रामान्मोक्षसाम्राज्यमलभत । रामेण हतो वाली रामान्मोक्षसिद्धिमलभत । शबरी मोक्षसिद्धिप्रतिबन्धकं शरीरमग्नौ प्रक्षिप्य सिद्धिं प्राप रामसन्निधौ रामं पश्यन्त्येव "चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन" इति वदन्ती । वाली स्वसिद्धिप्रतिबन्धकं स्वामिद्रोह-पितृद्रोहादिरूपमहापापं स्वशरीरं च रामेणापनाय्य प्रियदर्शनत्वेन स्वकीर्तितरामदर्शनमनुभवन्नेव रामाभयप्रदानेन परमं निःश्रेयसमवाप । वैष्णवं धनुः अगस्त्यमहर्षिद्वारा रामहस्तं प्रापितं प्रथमं इन्द्रात्मजशत्रुं रावणमित्रं वालिनं हन्तुं, अनन्तरं रावणं हन्तुं च ।

(मू) ततो वानरराजेन वैरानुकथनं प्रति ।
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ 61

वानरराजो वाली। वानरराजत्वं वालिने रामसाहाय्यार्थमेव दत्तमिति व्यज्यते ऋषिणा वानरराजशब्देन। वानरराजेन वालिना सह वैरवृत्तान्तमनुकथयेति रामेण पृष्टम्। तत्प्रश्नं प्रति तत्प्रतिवचनम्। पृष्टवते रामाय सर्वमावेदितम्। सर्वशब्देन स्वात्यन्तलज्जावहमवाच्यं स्वभार्याधर्षणानुभवादिकमप्यावेदितमिति द्योत्यते। लज्जावहतादृशगोप्यविषयावेदने हेतुद्वयं रामस्य सखित्वं स्वात्यन्तदुःखितत्वं च। रामाय प्रणयिनीरुमाधर्षणावेदने का लज्जा। अत्यन्तं दुःखेनाभिभूतस्य लज्जोल्लङ्घनं न चित्रम्। रुमावृत्तान्तावेदनाभावे वालिविषये तीव्रक्रोधो न भवेत् येन वालिवधः प्रतिज्ञायेत। 'भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम्। अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः। रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत्। तद्व्यतीतस्य ते धर्मात् कामवृत्तस्य वानर। भ्रातृभार्याभिमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः। ……………………औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः। प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः॥' इति रामक्रोधस्य प्रधानं निमित्तं रुमायां वर्तनमिति रामेण कथ्यते।

(मू) प्रतिज्ञातं च रामेण तदा वालिवधं प्रति।
वालिनश्च बलं तत्र कथयामास वानरः॥ 62

तदा—रुमावृत्तान्तादिमहापराधश्रवणेऽविलंबेन वालिवधप्रतिज्ञानं कृतम्। तत्र—रामेण वालिवधे प्रतिज्ञाते, हन्तव्यं शत्रुबलं ज्ञापनीयमेव॥

(मू) सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे।
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम्॥ 63

दर्शयामास सुग्रीवो महापर्वतसंनिभम्।

वालिबलं सुग्रीवस्य प्रत्यक्षानुभूतम् । रामबलं तु केवलं श्रुतम् । अतः सुग्रीवः शंकाग्रस्त आसीत् वालिवीर्याधिकरामवीर्यविषये । **नित्यम्** इत्यस्य वीप्सापरत्वमात्रमत्रेति चारु प्रदर्शितं गोविन्दराजीये महाभाष्याद्युदाहरणेन । रामदर्शनादारभ्य सालभेदनपर्यन्तं प्रतिक्षणं शंकात्रासावनुभवन्नेवासीत् । त्रुटिर्युगायतेऽस्य सुग्रीवस्य वालित्रस्तस्य । क्षणबहुत्वात् प्रतिक्षणं भयस्यावृत्तेश्च । नित्यशब्दो निपुणं प्रयुक्तः । एतस्मिन्नन्तरे एकैकः क्षणः अस्य शोकभयार्तस्य युगशतमिव भवतीति व्यज्यते नित्यशब्देन । **वीर्येण**— वीर्यविषये । रामदर्शनात्पूर्वं वालिवीर्येण नित्यं शंकित एवासीत् । 'राघवे' इति पर्यन्तं पठित्वा तथार्थोपि ग्राह्यः । 'उद्विग्नः शंकितश्चापि विहरामि महावने' इति सुग्रीवेण कथ्यते । रामदर्शनादनन्तरं राघववीर्यविषये प्रतिक्षणं शंकार्दित एवास्ते । **राघवप्रत्ययार्थम्** इत्यस्यार्थद्वयम् । राघवस्य वालिमहाबलज्ञापनार्थमिति वा, राघववीर्यविषयस्वप्रत्ययार्थमिति वा । प्रथमोऽर्थस्तिलकोक्तः । चरमश्च *तीर्थगोविन्दराजोक्तः । द्वावप्यर्थौ नारदहृदयस्थौ ।* 'वालिनः पौरुषं यत्तत् यच्च वीर्यं धृतिश्च या । तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम्' इत्यारभ्य दुन्दुभिवधं वर्णयित्वा, 'एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते' इति दुन्दुभिकायास्थिकूटं प्रदर्श्य,'वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमं । हतस्य महिषस्यास्थिपादेनैकेन लक्ष्मण । उद्यम्याथ प्रक्षिपेचेत् तरसा द्वे धनुश्शते ॥' इति राघवस्य वालिबलप्रत्ययार्थं स्वस्य राघववीर्यप्रत्ययार्थं च दुन्दुभ्यस्थिकूटं दर्शयामासेति वक्ष्यते। 'कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्याः वालिनो वधे' इति लक्ष्मणेन पृष्टे दुन्दुभ्यस्थिकूटदूरप्रक्षेपरूपपरीक्षाकांक्षा प्रोक्ता सुग्रीवेण । 'यदि न प्रत्ययोऽस्माकं विक्रमे तव वानर' इति राघववचनमपि भाव्यम् । उत्तममित्यस्य, उत्तमं राघवप्रत्ययसाधनं-प्रत्यायकमिति वा, *उत्तमं स्वप्रत्ययसाधनमिति वार्थः । महत्तमं— उन्नततममिति चार्थः* 'राघवस्य वालिमहाबलत्वे विश्वासार्थं उत्तमबलप्रत्यायनोत्तमसाधनम् ।' इति

तिलकः । उत्तमं-उन्नतं च इति गोविन्दराजः । महापर्वतसंनिभं— ऋश्य-मूकपर्वतनिकटेऽपरमहापर्वतमिव स्थितम् ॥

(मू) उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ॥ 64
पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ।

उत्स्मयित्वा—प्रहसन् । 'स्मितपूर्वमथो रामः' इति वक्ष्यते। 'उदार-मीषद्दास्यं कृत्वा' इति तीर्थतिलकौ । महाबाहुः इत्यनेन बाहुवीर्यनिश्चयेपि पादवीर्यपरीक्षा क्रियते देहबलज्ञानार्थमिति द्योत्यते । महाबलः पादाङ्गुष्ठेन चिक्षेप-अयं महाबलः पादाङ्गुष्ठमात्रेण महाकायदूरविक्षेपमकरोत् । वाली पादेन चिक्षेप, अयं तु पादाङ्गुष्ठमात्रेण । मन्दं हसन् चिक्षेप इति लीलया अनायासेन चिक्षेपेति व्यज्यते । पादाङ्गुष्ठेन लीलया इति वक्ष्यते । अस्य सुग्रीवस्य वालिविषयशंकावसरे पादाङ्गुष्ठबलप्रदर्शनेन सुग्रीवस्य प्रत्याय्यते । विभीषणादिरावणपर्यन्तराक्षसादिशंकावसरे 'अङ्गुल्यग्रेण तान् हन्यां' इत्युक्त्वा सुग्रीवप्रत्यायनं क्रियते ।

(मू) बिभेद च पुनः सालान्सप्तैकेन महेषुणा ॥ 65
गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ।

पुनः परीक्षान्तरनिर्वहणप्रार्थना कृता सुग्रीवेण स्वप्रत्ययार्थम् । 'इमे च विपुलाः सालाः सप्तशाखावलम्बिनः । यत्रैकं घटते वाली निष्पत्रयितुमोजसा । एतदस्या समं वीर्यं मया राम प्रकीर्तितम्' । 'सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले' इति एकसालनिर्भेदनमेव कांक्षितं बलपरीक्षायै । एकेन महाशरेण सप्त सालान् बहून्यन्यानि च निरभिनत् ॥

(मू) ततः प्रीतमनाः तेन विश्वस्तः स महाकपिः ॥ 66
किष्किन्धां रामसहितो जगाम च गुहां तदा ।
ततो गर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ॥ 67

'अद्य मे विगतः शोकः प्रीतिरद्य परा मम । येन सप्त महासाला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः' ॥ इति सुग्रीवेण वक्ष्यते । रामवालिबलाबलविषये रामस्यातिबलत्वप्रत्ययार्थं लोकस्यापि क्रियतेऽपरोक्षपरीक्षाद्वयेन । प्रत्ययं जनयन्निति लोकस्य - रामबलप्रत्ययकरणमपि सूच्यते । तदा—तत्क्षण एव । पर्वतान्तरवकाशो गुहावदवस्थिता किष्किन्धा । हरिशब्दः सिंहवाच्यपि । गुहायां गर्जत्ययं हरिवरः गुहायां सिंहः स्यात् गर्जत् च । स्वस्मिन् सिंहत्वबुद्धिरस्य । गुहायां तस्य गर्जननादः सिंहनाद इवाभवत् । अगर्जत् सुग्रीवः— शोभनशंखोपमा सुग्रीवस्य ग्रीवा । गुहास्थसुग्रीवकण्ठात् शंखघोष इव सिंहनादः । हेमपिंगलः—'हर्षप्रकर्षेण निवृत्तवैवर्ण्यः स्वर्णवत् पिंगलवर्णः विरराज' इति गोविन्दराजः ॥

(मू) तेन नादेन महता निर्जगाम हरीश्वरः ।
अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ 68

भ्रातृमहाघोषश्रवण एव हरीश्वरः स्वगृहान्निर्जगाम । हरीश्वरः सुग्रीवो हरिवरः, अयं तु हरीश्वरः । अनुमान्य इति णिचा भर्त्सननिर्बन्धनशमनादिभिः 'सुग्रीवं न च प्राणैर्विमोक्ष्यामी'ति वाग्दानेन च कथंचित् तां अनुमतिं दापयन् इति भावो व्यज्यते । अनेन प्रियतमया तारया सन्धिरूपहितमुपदिष्टोपि सुग्रीवेण युद्धार्थसमागममेव रोचयामास, न सन्धिसमागमम् । राघवसहाय एव सुग्रीवो योद्धुमागत इति स्पष्टमुक्तं तारया अंगदमुखात्

श्रुतमनुवदन्त्या । 'राघवसहायसुग्रीवेण सौहृदान्नान्या गतिरस्ति ते इति तारया अनन्यगतिकत्वं च स्पष्टं प्रतिबोधितम् । "वैरमेतत्समुत्सृज्य तत्र पार्श्वे स तिष्ठतु", "क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा" इति तदुक्तिभ्यां । उभाभ्यामपि भ्रातृभ्यां रामपक्षे स्थातव्यं, तत्पार्श्वस्थाभ्यां, भवितव्यं, रामेण विग्रहो न न्याय्य इति वदन्त्या तया वालिसुग्रीवयोरैक्यं उभयोस्सह रामकैंकर्यनिर्वर्तनौचित्यं च स्पष्टीकृतम् । स्वप्रियहिततमभार्यापुत्र-प्रार्थनामपि तिरश्चकार वाली, न केवलं स्वपित्रादिसर्वदेवलोकनियोगम् । इन्द्रपुत्रकाकविषये उक्तं 'स पित्रा च परित्यक्तः' इति । अस्य पुत्रस्य रामेण वधमेवाकांक्षेन्द्रः पिता । भ्रात्रोर्मध्ये सुग्रीव एव सहायत्वेन वरणीयः इति देवानां सिद्धान्त एवावेदितो दिवं गच्छता देवभूतेन कबन्धेन । 'तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वरः । अकृत्वा हि न ते सिद्धिमहं पश्यामि चिन्तयन्' इति तेन सीतापरिमार्गणाय रामस्य सुग्रीवानन्यगतिकत्वमुक्तम् ॥

(मू) निजघान च तत्रैनं शरेणैकेन राघवः ।

तत्र–सुग्रीवेण समागते सति, परिहीयमाणे सुग्रीवे आर्तिमापद्य शत्रुभयान्मोक्षणाय, 'प्रेक्षमाणं दिशश्चैव राघवं च मुहुर्मुहुः' इति वर्णयिष्यमाण-रीत्या राघवमाहूयं भृशमर्थयमाने । शरेण एकेन निजघान– स्वभार्या-पहारिणं रावणं युद्धप्रथमदिने एकेन शरेण जित्वापि तं न निजघान, किन्तु 'गच्छानुजानामी'ति तं निवर्तयामास । स्वाश्रितस्वमित्रभार्यापहारिणं वालिनं शरेणैकेन सद्यो जघान । स्वसेनाधिकारे इन्द्रादिदेवैर्नियुक्तस्य तदधिकारं परित्यज्य ततो भ्रष्टस्य देवस्वपितृशत्रुणा बद्धसख्यस्य सद्यः शीर्षच्छेद एव सेनान्यधर्मः । दण्डकस्य राज्ञः दण्ड्यदण्डनाय दण्ड्येन न योधननिर्बन्धः । राघवः इति नाम भ्रातृचतुष्टयसाधारणम् । यद्यपीदानीं राजा भरतः, उभावपि राघवौ । राघवशब्देन नृपभरतभ्रातृत्वं व्यज्यते । 'भरतस्य धर्मकृतादेशा वयम्' इति राघवेण वक्ष्यते ॥

(मू) स च सर्वान् समानीय वानरान् वानरर्षभः ॥ 70

दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।

स च इति, 'निवृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा । क्रीडन्तमिव देवेन्द्रं नन्दनेऽप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् । उत्सन्नराज्यसन्देशं कामवृत्तमवस्थितम् ॥' इति वर्णयिष्यमाणरीत्या रामकार्यं सर्वं विस्मृतवानपि इति द्योत्यते । हनूमत्प्रतिबोधनात्, 'समानयन्तु ते सैन्यं त्वरिताः शासनान्मम ।' 'त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥' इति हनुमद्द्वारा शासनेन समानिनाय । वानरान् नीलद्वारा समानाय्य सीतायाः पदान्वेषणेच्छया वानरान् सर्वा दिशः प्रस्थापयामास । दिदृक्षुः— सीतायाः पदान्वेषणमिच्छन् । 'दिदृक्षुः अन्वेषिषुः' इति तिलकः । जनकात्मजा—सीता । 'सुतामयोनिजां सीतां दद्यां दाशरथेरिह' इत्युच्यते जनकेन सीताविवाहप्रकरणे । दाशरथेरित्यत्र षष्ठीप्रयोगो रस्यः । पूर्वमपि दाशरथेरेव सीता । सम्प्रदानचतुर्थीकारकं न यथार्थं भवेत् । लांगलपद्धत्या देवयजनभूमिकर्षणे भूमेः स्वयमुत्थिता भाग्यवशात् जनकेन दृष्टा सुताभिमत्या संवर्धिता आत्मजाभिमतिविषयाऽभूत् । भविष्यत्पित्रे जनकाय यथा केवलं कृपया दर्शनं ददौ तथा मह्यमपि दिशेदिति हनूमदाशंसा । दिदृक्षुर्जनकात्मजाम् इत्यत्र जनकात्मजेति पदेनेदं व्यज्यते । 'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा' इति सम्पातिवचने 'जानकी' मिति सीताया निर्देशः । 'जनकस्यात्मजां द्रक्ष्यथ मैथिलीम्' इति च तदुक्तिः । 'सीतादर्शनकांक्षिणः', -न्वेष्टुम्' इति सीतापदप्रयोगोऽपि, 'सीताकृपयैव अविलंब-' इति व्यञ्जयति । 'देव्यै च तस्यै जनकात्मजायै इति त्यार्थनावचनमवधेयम् ।

ततः सुग्रीववचनाद् हत्वा वालिनमाहवे ॥ 69

सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ।

सुग्रीववचनाद् वालिनं निजघान । सर्वमन्यवचनात्, अन्यनियोगात् करोति राघवः । न स्वेच्छामात्रेणेति पुनः पुनः कथ्यते । वचनात्प्रवृत्तिरिति राघवानुष्ठानम् । 'वचनं कौशिकस्येति कर्तव्यमविशङ्कया' इति ताटकावधावसरे उक्तम् । 'अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम्' 'हनूमद्वचनाच्चैव सुग्रीवेण समागतः' इत्यादिकं भाव्यम् । सुग्रीववचनात् वालिनमाहवे हत्वा ततः सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयदित्यन्वयः कार्यः । 'धातोः स्थान इवा-देशं सुग्रीवं सन्यवेशयत्' इति रघुवंशे कालिदासः । वालिस्थाने सुग्रीवः । इतरत्सर्वं वालिराज्यमिव । सैव तारा प्रियतमा महिषी । वालिपत्न्यः सुग्रीवपत्न्यः । वालिपुत्र एव युवराजः । राज्यांगभूतं राज्यमात्यादिकं पूर्व-वदेव । स्थानिवदादेशः । प्रकृतिप्रत्ययाः आश्लिष्येयुः । प्रकृतिस्थानापन्न-मादेशं च प्रत्ययाः आश्लिष्यन्ति । "भ्रातुरन्तः पुरं सौम्यं प्रविवेश महाबलः" "त्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् । विहरन्तमहोरात्रं कृतार्थं विगतज्वरम्" इति वक्ष्यते । प्रकृतिसुतः आदेशसुतवत् युवराजो भवति । रामेण स्वाभिषेकात्पूर्वं स्वाभिषेक इव मित्राभिषेको निरवर्त्यत । 'अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः । शास्त्रदृष्टेन विधिना महर्षिविहितेन च । गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव हनुमान् जाम्ब-वान्नलः । अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा' इति सुग्रीवपट्टाभिषेकश्लोकाः भाव्याः । यथास्मिन्नभिषेके सप्तसमुद्रपुण्यनद्यादितीर्थोदकाः हृयः तथैव रामाभिषेकेऽपि । प्रत्यपादयदिति णिचा नगरे स्वयमप्रविश्यैव वानरराज्यमन्यादिभिरकारयदिति द्योत्यते राज्ये मित्रं निवेश्य स्वयं माल्यवति न्यवसदुज्जृंभितायां प्रावृषि ॥

(मू) स च सर्वान् समानीय वानरान् वानरर्षभः ॥ 70

दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।

स च इति, 'निवृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा । क्रीडन्तमिव देवेन्द्रं नन्दनेऽप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् । उत्सन्नराज्यसन्देशं कामवृत्तमवस्थितम् ॥' इति वर्णयिष्यमाणरीत्या रामकार्यं सर्वं विस्मृतवानपि इति द्योत्यते । हनूमत्प्रतिबोधनात्, 'समानयन्तु ते सैन्यं त्वरिताः शासनान्मम ।' 'त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥' इति हनुमद्द्वारा शासनेन समानिनाय । वानरान् नीलद्वारा समानाय्य सीतायाः पदान्वेषणेच्छया वानरान् सर्वा दिशः प्रस्थापयामास । दिदृक्षुः— सीतायाः पदान्वेषणमिच्छन् । 'दिदृक्षु अन्वेषिषु.' इति तिलकः । जनकात्मजा—सीता । 'सुतामयोनिजां सीता ददौ दाशरथेरिह' इत्युच्यते जनकेन सीताविवाहप्रकरणे । दाशरथेरित्यत्र षष्ठीप्रयोगो रस्यः । पूर्वमपि दाशरथेरेव सीता । सम्प्रदानचतुर्थीकारकं न यथार्थं भवेत् । लाङ्गलपद्धत्या देवयजनभूमिकर्षणे भूमेः स्वयमुत्थिता भाग्यवशात् जनकेन दृष्टा सुताभिमत्या संवर्धिता आत्मजाभिमतिविषयाऽभूत् । भविष्यत्पित्रे जनकाय यथा केवलं कृपया दर्शनं ददौ तथा मह्यमपि दित्सेदिति हनूमदाद्याशंसा । दिदृक्षुर्जनकात्मजाम् इत्यत्र जनकात्मजेति पदेनेदं व्यज्यते । 'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा' इति सम्पातिवचने 'जानकी' मिति सीताया निर्देशः । 'जनकस्यात्मजां राज्ञ तत्र द्रक्ष्यथ मैथिलीम्' इति च तदुक्ति. । 'सीतादर्शनकाङ्क्षिणः', 'सीताया पदमन्वेष्टुम्' इति सीतापदप्रयोगोऽपि, 'सीताक्रूपयैव अविलंब-सीतादर्शनसंभव ' इति व्यञ्जयति । 'देव्यै च तस्यै जनकात्मजायै' इति अशोकवनिकादर्शनपूर्वसर्गान्ते हनुमत्प्रार्थनावचनमवधेयम् ।

ततः सुग्रीववचनात् हत्वा वालिनमाहवे ॥ 69

सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ।

सुग्रीववचनात् वालिनं निजघान । सर्वमन्यवचनात्, अन्यनियोगात् करोति राघवः । न स्वेच्छामात्रेणेति मुनः मुनः कथ्यते । वचनात्प्रवृत्तिरिति राघवानुष्ठानम् । 'वचनं कौशिकस्येति कर्तव्यमविशंकया' इति ताटकावधावसरे उक्तम् । 'अगस्त्यवचनाचैव अग्राहैन्द्रं शरासनम्' 'हनुमद्वचनाचैव सुग्रीवेण समागतः' इत्यादिकं भाव्यम् । सुग्रीववचनात् वालिनमाहवे हत्वा ततः सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयदित्यन्वयः कार्यः । 'धातोः स्थान इवादेशं सुग्रीवं सन्यवेशयत्' इति रघुवंशे कालिदासः । वालिस्थाने सुग्रीवः । इतरत्सर्वं वालिराज्यमिव । सैव तारा प्रियतमा महिषी । वालिपत्न्यः सुग्रीवपत्न्यः । वालिपुत्र एव युवराजः । राज्यांगभूतं राज्यमात्यादिकं पूर्ववदेव । स्थानिवदादेशः । प्रकृतिप्रत्ययाः आश्लिष्येयुः । प्रकृतिस्थानापन्नमादेशं च प्रत्ययाः आश्लिष्यन्ति । "प्राप्तुरन्तःपुरं सौम्यं प्रविवेश महाबलः" "त्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् । विहरन्तमहोरात्रं कृतार्थं विगतज्वरम्" इति वक्ष्यते । प्रकृतिपुत्रः आदेशपुत्रवत् युवराजो भवति । रामेण स्वाभिषेकात्पूर्वं स्वाभिषेक इव मित्राभिषेको निरवर्त्यत । 'अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः । शास्त्रदृष्टेन विधिना महर्षिविहितेन च । गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव हनुमान् जाम्बवान्नलः । अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा' इति सुग्रीवपट्टाभिषेकश्लोकाः भाव्याः । यथास्मिन्नभिषेके सप्तसमुद्रपुण्यनद्यादितीर्थाहराः हरयः तथैव रामाभिषेकेपि । प्रत्यपादयदिति णिचा नगरे स्वयमप्रविशन्नेव वानरराज्यमन्त्र्यादिभिरकारयदिति द्योत्यते । राज्ये मित्रं निवेश्य स्वयं माल्यवति न्यवसदुज्जृम्भितायां प्रावृषि ॥

( मू ) स च सर्वान् समानीय वानरान् वानरर्षभः ॥ 70

दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।

स च इति, 'निवृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा । क्रीडन्तमिव देवेन्द्रं नन्दनेऽप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् । उत्सन्नराज्यसन्देशं कामवृत्तमवस्थितम् ॥' इति वर्णयिष्यमाणरीत्या रामकार्यं सर्वं विस्मृतवानपि इति द्योत्यते । हनूमत्प्रतिबोधनात्, 'समानयन्तु ते सैन्यं त्वरिताः शासनान्मम ।' 'त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥' इति हनुमद्द्वारा शासनेन समानिनाय । वानरान् नीलद्वारा समानाय्य सीतायाः पदान्वेषणेच्छया वानरान् सर्वा दिशः प्रस्थापयामास । दिदृक्षुः— सीतायाः पदान्वेषणमिच्छन् । 'दिदृक्षुः अन्वेषिषुः' इति तिलकः । जनकात्मजा—सीता । 'सुतामयोनिजां सीतां दद्यां दाशरथेरिह' इत्युच्यते जनकेन सीताविवाहप्रकरणे । दाशरथेरित्यत्र षष्ठीप्रयोगो रस्यः । पूर्वमपि दाशरथेरेव सीता । सम्प्रदानचतुर्थीकारकं न यथार्थं भवेत् । लांगलपद्धत्या देवयजनभूमिकर्षणे भूमेः स्वयमुत्थिता भाग्यवशात् जनकेन दृष्टा सुताभिमत्या संवर्धिता आत्मजाभिमतिविषयाऽभूत् । भविष्यत्पित्रे जनकाय यथा केवलं कृपया दर्शनं ददौ तथा मह्यमपि दित्सेदिति हनूमदाद्याशंसा । दिदृक्षुर्जनकात्मजाम् इत्यत्र जनकात्मजेति पदेनेदं व्यज्यते । 'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा' इति सम्पातिवचने 'जानकी' मिति सीताया निर्देशः । 'जनकस्यात्मजां राज्ञः तत्र द्रक्ष्यथ मैथिलीम्' इति च तदुक्तिः । 'सीतादर्शनकांक्षिणः', 'सीतायाः पदमन्वेष्टुम्' इति सीतापदप्रयोगोऽपि, 'सीताकृपयैव अविलंबसीतादर्शनसंभवः' इति व्यञ्जयति । 'देव्यै च तस्यै जनकात्मजायै' इति अशोकवनिकादर्शनपूर्वसर्गान्ते हनुमत्प्रार्थनावचनमवधेयम् ।

( मू ) ततो गृध्रस्य वचनात् सम्पातेर्हनुमान्बली ॥ 71

शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ।

अस्मिंश्लोके किष्किन्धासुन्दरकाण्डयोस्सन्धिः । ततः इति, 'ततो रावणनीतायाः' इति सुन्दरकाण्डारंभश्लोकसूचनम् ।

सम्पातिः सीतापदतत्त्वदर्शी साक्षाद्दृष्टा आचार्यः । तद्वचनात् हनुमान्सीतां ध्यायन् तामन्विष्यन् सागरमुल्लंघयति । किष्किन्धाकाण्डान्तभवस्य आचार्यसम्पातिवचनस्य हनूमदन्वेषणप्रयोजकस्य सुन्दरकाण्डारंभेऽव्यवधानेन बुद्धौ सन्निधानमिष्यते। 'शतयोजनविस्तीर्णं पुप्लुवे लवणार्णव'मिति सुदीर्घसुन्दरप्रथमसर्गः । गृध्रस्य वचनात्सम्पातेः यथाऽन्यवचनात्प्रवर्तते रामः तथा तद्दासो हनूमान् सम्पातिवचनात्सागरं लंघयते सीतादर्शनाय । 'चारणाचरिते पथि' इत्यस्य सीताप्रत्यक्षदर्श्याचार्यसम्पातिप्रोक्तमार्गेणेत्यप्यर्थः कथञ्चित् ग्राह्यः । 'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा' इति सीतां लंकास्थां दृष्ट्वा तस्याः लंकायामवस्थानमुपदिदेश । 'सम्पातेर्वचनं श्रुत्वा हर्यो रावणक्षयम् । हृष्टास्सागरमाजग्मुः सीतादर्शनकांक्षिणः' इति वक्ष्यमाणमिह भाव्यम् । 'भवतां तु समर्थानां न किञ्चिदपि दुष्करम् । तदलं कालसंगेन क्रियतां बुद्धिनिश्चयः' इति सम्पातिना वानराः प्रोत्साहिताः त्वरिताश्च । गृध्रस्येति पदेन गृध्रराजयोः सम्पातिजटायोर्मध्ये जटायुः अर्थोपदेशो ममार । 'पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च । इत्युक्त्वा दुर्लभान्प्राणान् मुमोच पतगेश्वरः' इति जटायोर्योक्तिः । 'ब्रूहि ब्रूहि इति रामस्य ब्रुवाणस्य कृताञ्जलेः । त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम्' इति रामस्य करुणयाच्ञा 'पुत्रो विश्रवसः साक्षात् भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लंकां रावणो नाम राक्षसः । इतो द्वीपे समुद्रस्य सम्पूर्णे शतयोजने । तस्मिन् लंकापुरी रम्या निर्मिता

विश्वकर्मणा। तस्यां वसति वैदेही दीना कौशेयवासिनी। रावणान्तःपुरे रुद्धा राक्षसीभिस्समावृता' इति वानरान्प्रति सम्पातिवचने 'पुत्रो विश्रवसः साक्षात् भ्राता वैश्रवणस्य च' इति भ्रातृजटायुचरमार्धवचनमेवानूद्य तदनुक्तस्यावशिष्टस्य पूरणं क्रियते ज्येष्ठभ्रात्रा गृध्रेणेति व्यज्यते। सामान्यगृध्रशब्दप्रयोगादुभयोरपि गृध्रयोर्वचनस्यैकवाक्यत्वं व्यज्यते। 'आचार्यस्तु ते गतिं वक्ता' इत्युपकोसलविद्यायां आचार्यःऽग्निभिरनुपदिश्य परिशेषितं पूरयति। गृध्राणां सुदूरद्रष्टृत्वशक्तिः प्रसिद्धा। 'वचनात्सम्पातेः'। अस्त्यत्रापि महान् रसः वचनसम्पात्योस्समभिव्याहारे। किमर्थं सीतास्थानादिकथनमात्रेणोपकारः कृतः सम्पातिना। किं तेनाकाशे सम्पत्य सीतां दृष्ट्वा तस्यै रामवृत्तान्तोद्योगादिकमावेद्य तामाश्वासयितुं न शक्यते। शक्यमेव तस्य सम्यग्व्योम्नि पतितुं लंकां त्वरया गन्तुं सीतां द्रष्टुञ्च। राक्षस्याद्यविज्ञातं यथा तथा सीतासमीपं गत्वा तया हनूमत्संभाषणादिकं लंकायां विक्रमणादिकं च सुकरम्। संपातिः स्वयं लंकां प्रतिचारणाचरिते पथि अक्लेशेन पतितुं लंकां प्राप्तुं समर्थोपि इति परिकरांकुरालंकारः। यद्यपि संपतनसमर्थः सम्पातिः गृध्रः सः। संपातिवचनात् लंघयन् सागरं हनूमान् संपातिवचनानुसरणाकांक्षी। 'न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः' इति संपातिवचनमनुसरन् 'न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु। मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधा' इति रावणं प्रति वदति। सज्जन्ते इति शब्दमर्थान्तरे प्रयुक्ते। सम्पातेर्हनुमान्बली, बलवानेव जटायुज्येष्ठः संपातिः। तथापि तदपेक्षया हनूमान् बलवत्तरः। तस्मादपि संपात्यपेक्षया हनूमतो गमनम्। लंका गन्त्रा रामपक्षध्येन बलिष्ठतया भाव्यम्। बलीति मत्वर्थीयप्रत्ययेन बलातिशय उच्यते। संपातेर्हनुमान्बली इति समहारेणान्वयोऽपीष्यते। सागरलंघनं सदृशं गृध्रराजस्य सुकरतमं च हनुमदपेक्षया। विहायसा पतने समर्थतरः संपातिः। बलं तु हनुमतोऽधिकम्। 'बुद्धयता च मया वीर्यं रावणस्य

दुरात्मनः' इत्यादस्य वचनमपि भाव्यम् । हनुमान् बली—संपातिवचनश्रवणानन्तरमेव जांबवत्संधुक्षणेन हनूमतो बलाधिक्यं संपद्यते । इदमपि व्यज्यते बली इति हनुमद्विशेषणेन । 'उत्तिष्ठ हरिशार्दूल लंधयस्व महार्णवम् । परा हि सर्वभूतानां हनुमत्या गतिस्तव । विषण्णा हरयस्सर्वे हनूमन् किमुपेक्षसे । विक्रमस्व महावेगो विष्णुस्त्रीन् विक्रमानिव' इति महर्षीणां शापात् प्रसुप्तं स्ववीर्यं स्मार्यते हनूमान् जांबवता वृद्धतमेन । 'बाधसे यत्समाश्रित्य बलमस्मान् प्लवंगम । तद्दीर्घकालं वेत्तासि नास्माकं शापमोहितः । यदा हि स्मार्यते कीर्तिस्तदा ते वर्धते बलम् । ततः सहजतेर्वीर्यमहर्षिवचनौजसा' इत्युत्तरकाण्डे रामं प्रत्युच्यतेऽगस्त्येन । प्रसुप्तमभवत् हनुमद्बलं महर्षिशापात् । प्रसुप्तं बलं जाम्बवत्स्मारणेन प्रबोध्य उत्थाप्यते । 'उत्तिष्ठ मूढे किं शेषे' 'उत्तिष्ठ नरशार्दूल' इत्यादाविवात्र 'उत्तिष्ठ हरिशार्दूल' इति पठ्यत इति रसोऽनुभाव्यः । प्रसुप्तस्य हनुमद्बलस्य जाम्बवता वृद्धतमेन सुप्रभातं पठ्यत इति रसः । इदं सर्वं व्यज्यतेऽत्र सम्पातिवचनानन्तरं सागरलंघनात्पूर्वं हनुमान्बली इति पठनेन । 'हनूमान्बली' इत्याभ्यां पदाभ्यां पूर्वकथाप्रस्तावेन जाम्बवता कृतोत्साहत्वं तदुद्भूतनिरवधिकबलवत्त्वं च द्योत्यते इति श्रीगोविन्दराजः ।

(मू) तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
दर्दश सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ 72

लङ्कां रावणपालितां पुरीं समासाद्य तत्र अशोकवनिकां गतां सीतां ददर्श इत्यन्वयः प्रदर्शितः । तत्र इत्यस्य अर्णवप्लवने-इति नार्थः । एकस्मिन्नेवोत्पतने । लङ्कां रावणपालिताम् इति पुनः पुनः पठिष्यते लंकागमनस्य दुष्करत्वद्योतनाय । समित्युपसर्गेण चतुरंगुलमात्रावकाशमप्यविहाय कृत्स्नलंकायामप्यासादनान्वेषणे व्यज्येते । सर्वां पुरीं प्रथमं सम्यगन्विष्य अनन्तरं वनिकामन्विष्यति । पुरीं लंकां समासाद्य इति लंकापुरीदेवता-

समासादनमपि ग्राह्यम् । 'अद्य हि नगरी लङ्का स्वयमेव प्लवंगम' इति तया वक्ष्यते । ददर्श सीतां—सीतापदेन तत्कृपयैव ददर्शेति व्यज्यते, तस्याः पित्रे जनकाय स्वयं दृष्टिविषयीभूतत्ववृत्तान्तस्मारणेन । ध्यायन्तीं—राममेव ध्यानेनानुपश्यन्तीं सीतां ददर्श । ध्यानस्य दर्शनसमानाकारत्वं वेदान्तप्रसिद्धम् । मातरं सीतां ध्यायन् हनुमान् तस्याः कृपया तां ददर्श । सा च तदा राममेव ध्यानेनानुपश्यन्ती स्थिता । 'नेमान् पुष्पफलद्रुमान् पश्यति नूनं राममेवानुपश्यती' ति वक्ष्यते । अशोकवनिकां गतां ध्यायन्तीं—'अशोकवनिका चेयं दृश्यते या महाद्रुमा' 'वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम्' इति वक्ष्यते । जनमनो नयनाह्लादकाशोकादिपुष्पफलभरितद्रुममण्डिता न पश्यति, एकस्थहृदया राममेव ध्यायन्ती । पुरी सर्वा अन्विष्टा, वनिकामात्रमनन्विष्टम् । वनिका—अल्पार्थे अनुकम्पार्थे च कप्रत्ययः । निष्कुटवृक्षवाटी प्रमदावनम् । 'अशोक शोकापनुद शोकोपहतचेतसम् । त्वन्नामानं कुरु क्षिप्रं प्रियासन्दर्शनेन माम्' इति रामाक्रन्दितम् । अशोकवनिकागता दुःखस्यान्तमपश्यन्ती व्यसनपरम्परया निपीड्यमानाऽऽसीत् । अशोकवनिकायां शोकध्यानपरा दीना नित्यं दुःखपरायणाऽभवत् ।

(मू) निवेदयित्वाऽभिज्ञानं प्रवृत्तिञ्च निवेद्य च ।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ 73

सीतां ददर्श । तस्यै अभिज्ञानं निवेदयित्वा—दत्वा, रामप्रवृत्तिञ्च निवेद्य च वैदेहीं समाश्वास्य च, अशोकवनिकागतं तोरणं मर्दयामास इत्येकस्या निशाया एकदेशे अतित्वरितं बहूनि कार्याणि हनुमता साधितानीति द्योत्यते । अभिज्ञानसमर्पणं, रामप्रवृत्तिनिवेदनं सीतासमाश्वासनं च कृत्स्नं बहुभिस्सर्गैर्वर्ण्यते । आरम्भप्रभृति भूयो भूयः समाश्वासनं क्रियते अभिज्ञानप्रवृत्त्यादिनिवेदनेन । रामप्रवृत्तिनिवेदनं च पुनः पुनः क्रियते ।

अभिज्ञाननिवेदनं च भूयो भूयः क्रियते । समाश्वासेन ऐकान्तिकेन भवितव्यं, न तस्य डोलारोह उचितः । पञ्चत्रिंशसर्गे, 'हनुमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा' इति तस्या विश्वासदार्ढ्यस्याकम्पनीयत्वेन जनिः कथिता । कपिरेवायं, न कपिकुहनाधरो रावण इति तदा दार्ढ्यं विश्वासस्य । अनन्तरं षट्त्रिंशसर्गारंभे, सीताप्रत्ययकारणात् तत्प्रत्ययार्थमानीतमङ्गुलीयकरूपमभिज्ञानं तस्यै प्रदर्शयामास । 'समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि' इति तां समाश्वासयामास च । एकोनचत्वारिंशत्सर्गे च, 'क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि । रावणं चैव रामेण निहतं द्रक्ष्यसेऽचिरात् । एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत्' इत्युक्तम् । समाश्वास्य च वैदेहीं इति संक्षेपोक्तकथा चत्वारिंशत्सर्गपर्यन्तमनुगम्यते । 'त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर । अर्धसञ्जातसस्येव वृष्टिं प्राप्य वसुन्धरा'-इति स्वस्याः महान् हर्षः स्ववाचैवोदीरितः अनन्तरसर्गे । त्रिंशसर्गादारभ्य आचत्वारिंशत्सर्गान्तं सीताप्रत्ययोत्पादने, रामप्रवृत्तिनिवेदने च, सीताधैर्योत्पादने च भूयानुद्यमो हनूमतः । 'रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति । ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी । जानाना मां विशालाक्षी रावणं कामरूपिणम्' इत्यादिना कृत्याकृत्यविचिन्तनं चतुरं कृतं त्रिंशसर्गे । 'राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् । नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् । इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः । शुभानि धर्मयुक्तानि वचनानि समर्पयन् । श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् । श्रद्धास्यति यथा हीयं तथा सर्वं समादधे' इत्यारंभ एवोक्तं हनुमता । **अभिज्ञानं निवेदयित्वा** इति न केवलमंगुलीयकसमर्पणं, किन्तु यद्यत् रामदूतत्वप्रत्ययजननाय श्राव्यते सीता हनुमता रामकथासंकीर्तनप्रभृति, तत्सर्वमपि जिघृक्ष्यते, 'विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः । अचिराद्राघवो देवि त्वामितो नयिताऽनघे । एवं विश्वासिता सीता हेतुभिः शोक-

कर्शिता । रूपपन्नैरभिज्ञानैर्दूतं तमवगच्छति' इति पञ्चत्रिंशसर्गे 'अभिज्ञानैरिति बहुवचनप्रयोगात् । गुरूक्ताभिज्ञानशब्द एव प्रयुज्यते शिष्येण । अभिज्ञानैरिति बहुवचनान्ततया च प्रयुज्यते । अभिज्ञानमिति संक्षेपश्लोके जातावेकवचनम् । अंगुलीयकसमर्पणस्य प्राधान्यज्ञापनार्थमेकवचनप्रयोगः । निवेदनशब्दश्च समर्पणं, ज्ञापनञ्चाभिधत्ते । 'निवेदयित्वा, निवेद्य' इति प्रयोगद्वयस्यापि साधुत्वं समर्थितं श्रीगोविन्दराजैः। द्वयमप्यत्र प्रयुज्यते एकस्मिन्नर्थे । 'यावत्प्रवृत्तिं श्रृणुयां प्रियस्य' इति सीतयोक्ता प्रवृत्तिर्वार्ता । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इति अमरः । रामलक्ष्मणयोः कुशलवृत्तान्तः, तयोः सीतामत्यानयनोद्योगवृत्तान्तश्च प्रवृत्तिशब्दाभिप्रेतः । रामस्य कुशलं सीताविरहप्रयुक्तां तद्दुर्मनायमानतां, सीतान्वेषणतत्प्रत्यानयनाद्युद्योगञ्च वर्णयन् समाश्वासनं च भूयोभूय. करोति । सम्पूर्णसमाश्वासनमेव मुख्यमुद्देश्यम् । पूर्वोक्तद्वयस्य तादर्थ्यात् तस्य चरमकीर्तनम् । एतत्त्रितयमपि एकाधिकदशसर्गेषु संमिश्रतया वर्ण्यते । त्रयाणामपि त्वया ग्रहणं कृतम् । त्रयमपि तोरणमर्दनात्पूर्वमभावीति न तेषां क्रमिकनिर्देशे तावानादरः । त्रयाणां समुच्चय । मर्दयामास तोरणम्—तोरणं च अशोकवनबहिर्द्वारम् । तोरणेन वनमपि लक्ष्यते । वनमपि मर्दितम् । तोरणमर्दने च तोरणपरिघमादाय प्रतियोधिराक्षसवीराणां मर्दनं च कृतम् । चण्डमारुतेन वनं भज्येत । तत्पुत्रो मारुतिः कथं तत् न भञ्ज्यात् । इदं चौचित्यं प्रदर्शितं ऋषिणा 'ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः । ऊरुवेगेन महता द्रुमान् क्षेप्तुमथारभत्' इति वनभंजनसर्गे एकचत्वारिंशे । चण्डमारुतिर्वनं बभंज। 'युयुत्सुरेको बहुभिर्महाबलैः श्रिया ज्वलंस्तोरणमास्थितः कपिः' इति सर्गान्तश्लोकोऽत्र भाव्यः ॥

(मू) पञ्च सेनाग्रगान् हत्वा सप्तमन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ 74

एकरात्रौ अतित्वरितं वृत्तयुद्धानां शत्रुवधानां च वर्णने क्रमानादरेण तेषां यौगपद्यप्रायत्वमिति द्योत्यते। प्रथमं किंकराः प्रेषिताः। तेषु हतेषु प्रहस्तपुत्रो जम्बुमाली। 'न वीरसेना गणशोच्यवन्ते' इति श्लोके चरमं इन्द्रजित्प्रेषणे, सेनानां प्रेषणे गणशो नाश एव भवति, न ताभिरग्रगस्यावनं सम्पद्येत इत्युक्तं रावणेन। इन्द्रजिदेक एव योद्धुं जगाम। प्रथमप्रेषितं रावणकिंकराणां अशीतिसहस्रं हतं हनुमता। बहूनां प्रेषणमरोचयमानः प्रहस्तपुत्रमेकं समादिदेश। अयं च रावणभावो व्यज्यते ऋषिणा, 'स राक्षसानां निहतं महद्बलं निशम्य राजा परिवृत्तलोचनः। समादिदेशाप्रतिमं पराक्रमे प्रहस्तपुत्रं समरे सुदुर्जयम्॥' इति द्विचत्वारिंशसर्गान्ते। तस्मिन् हते नैको मन्त्रिपुत्रः प्रेषणीय इति मन्त्रिपुत्रसप्तकं प्रेषितम्। न सेना प्रेषिता तदा। 'प्रहस्तपुत्रे निहते महाबले अमात्यपुत्रानतिवीर्यविक्रमान्।...समादिदेशाशु निशाचरेश्वरः' इति चतुश्चत्वारिंशान्तिमश्लोकेन रावणभावो व्यज्यते। अनन्तरं सेनासहिताः पञ्चसेनाग्रनायकाः प्रेषिताः। पञ्चवीरप्रमुखाः सेनया सह तदा प्रेषिताः। प्रथमप्रेषिताः स्वकिंकराः न सनायकाः। 'हतान् मन्त्रिसुतान् बुद्ध्वा वानरेण महात्मना', 'पंचसेनाग्रनायकान् सन्दिदेश दशग्रीवः' 'यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः' इति ते सन्दिष्टाः। अत्र संक्षेपश्लोके पञ्च सेनाग्रगान् हत्वा इत्युक्तं अनुसृतं कविना। 'सेनाग्रग' शब्दो रूढियोगार्थेत्युभावपि प्राप्तौ वृत्तकथानुसारेण। सप्तमन्त्रिपुत्रयुद्धात्पूर्वं अस्य व्युत्क्रमेण निर्देशोऽस्ति भावविशेषः। प्रथमसेनातुल्यबहुकिंकरसंघः प्रेषितः, किन्तु अग्रगनायकरहिताः इति प्रथमपूर्वसूचं विरुद्धोपमयोर्धीमूलत्वस्फोरणेन कथंचित् व्यज्यते। पञ्चसंख्योपक्रमश्च भावि पञ्चत्वं स्फोरयति। पञ्च वा सप्त वा भवतु वीरयोधसंख्या, दशसहस्री वा भवतु, पञ्चत्वमेव तेषां गतिः। पञ्चानां पञ्चत्वं, सप्तानां च, अशीतिसहस्रस्य च तुल्या वधगतिः। बहुसेना, नायकसहिता, महती सेना पञ्च-

सेनाग्रप्रेषण एव प्रेषिता । 'स तस्य कृत्वार्थपतेर्महाकपिर्महद्व्यलीकं मनसो महात्मनः । युयुत्सुरेको बहुभिर्महाबलैः श्रिया ज्वलंस्तोरणमास्थितः कपिः' इति वनमर्दनोत्तरं तोरणारूढेन स्थितेन एकेन बहुभिर्योधनं तीव्रकांक्षित-मित्युक्तम् । 'युयुत्सुरेको बहुभिर्महाबलैः' महाबलैरित्यस्य 'बलिष्ठैः', 'महा-सेनाभिः' इति द्वेधाप्यर्थो भाव्यः । एतद्‍द्व्यतीव्राकांक्षा पञ्चसेनाग्रयुद्धैरपूर्यत । इदमपि सूच्यते तत्प्रथमनिर्देशेन । वीरश्रिया ज्वलन्तमूर्ध्वरेतसं जितेन्द्रियं जयश्रीर्वरिष्यते । पञ्चसेनानायकसहितपञ्चसेनाभिस्सह युद्धे सम्पद्यमानस्य जयस्य सुमहती आज्वल्यमानता । मन्त्रिसुतेषु हतेषु राजपुत्रोऽक्षः बलैस्समेतः प्रेषितः । तस्य शौर्यं गुरुणा प्रशस्यते । तस्य शौर्यं हनुमन्तमनोऽरञ्जयत् । 'अवैक्षताक्षं बहुमानचक्षुषा' । 'अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म महन्महाबलः । न चास्य सर्वाहवकर्मशोभितः प्रमापणे मे मतिरत्र जायते' इति हनूमतोऽपि तद्वीर्यरञ्जितचित्तस्य वीरबालहननमतिः प्रथमं न्यवार्यत इति व्यज्यते 'शूरमक्ष' मिति । मन्त्रिपुत्रप्रेषणानन्तरं राजपुत्र-प्रेषणस्य सुगमत्वात् अक्षस्य रावणकुमारत्वमभिधानं विनैव व्यंग्यम् । यद्यपि तद्धिंसनाऽरुचिः प्रथमं समजनि, अनन्तरं 'न खल्वयं नाभिभवेदुपेक्षित पराक्रमो ह्यस्य रणे विवर्धते। प्रमापणन्त्वेव ममास्य रोचते न वर्धमानोग्निरुपेक्षितु क्षमः॥' इति तद्वधे तीव्ररुचिरुदपद्यत । अम्बरे विचरन्तं तं, सः मारुततुल्य-विक्रमः समेत्य पादयोर्दृढं अण्डजेश्वरो महोरगमिव गृहीत्वा सहस्रशः' समा-विध्य महीतले वेगात् मुमोच । स च कुमारः 'भग्नबाहूरुकटीशिरोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः प्रभिन्नसन्धिः प्रविकीर्णबन्धनः हतः क्षितौ वायु-सुतेन राक्षसः' इति तस्य निष्पीडनं, तेन मारणं च वर्णितम् । शूरमिति प्रथमपदेन, अक्षं च निष्पिष्य इत्यनन्तरसन्दर्भेण च, हनुमतः प्रथमं तस्य वीर्येण विद्धत्वं तस्य अहन्तव्यबुद्धिजननिः, अनन्तरं तस्य स्वहस्तेनैव सर्पमारं निष्पेषणं च चतुरं व्यज्यते । निष्पिष्य—चूर्णीकृत्य इति श्रीगोविन्दराजः ।

तस्यौर्ध्वदेहिकक्रियायै भवयवितया, भवयवशो वा देहास्थीन्येवावशिष्टानि। ग्रहणं समुपागमत् कथंचित् ग्रहणं, रावणसमीपनयनं रावणेन संवादश्च तीव्रमकांक्ष्यन्त। अयं च महाचार्यः रावणस्याप्युपदेशं कर्तुं चकांक्ष। सीतां प्रत्येवायं दूतत्वेन प्रेषितः सुग्रीवराघवाभ्याम्। रावणविषयेऽयं स्वयं कृतदूतः। रावणपालितलंकानगरीं प्रति गमनाभ्यनुज्ञायां इदमप्यनुमतं स्यादिति मतिः। अनुमतं भवतु वा, मा वा, तदविरुद्धमेवेदम्। 'कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत्। पूर्वकार्याविरोधेन सकार्यं कर्तुमर्हति' इति स्वेनैवोक्तं भाव्यम्। 'कथं नु खल्वद्य भवेत्सुखागतं प्रसह्य युद्धं मम राक्षसैस्सह। तथैव खल्वात्मबलं च सारवत्संमानयेन्मां च रणे दशाननः॥ ततस्समासाद्य रणे दशाननं स मन्त्रिवर्गं सबलप्रमाथिनम्। हृदि स्थितं तस्य मतं बलं च वै सुखेन मत्वाहमितः पुनर्व्रजे॥' इति रावणायोधनपर्यन्तमनोरथः प्रादर्शि। स्वयं रावणस्यानागमनेन इन्द्रजिदभियोगे 'स रोचयामास परैश्च बन्धनं प्रसह्य वीरैरभिनिग्रहं च। कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः॥' इति स्वयमेव रावणदर्शनोपायत्वेन बन्धनं रोचयामास। 'ग्रहणं समुपागमत्' इत्यनेन तत्पूर्वमिन्द्रजिदस्त्रैरग्रहणं व्यज्यते। 'शराणामन्तरेष्वाशु व्यवर्तत महाकपिः। हरिस्तस्याभिलक्ष्यस्य मोघयन् लक्ष्यसंग्रहम्', 'ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु' इति तदस्त्राणां लक्ष्यस्पर्शवारणं कथितम्। तस्य कपेः शस्त्रावध्यतां समीक्ष्य तं ब्राह्मास्त्रेण निजग्राह। ब्रह्मास्त्रस्यापि न हनूमद्धनने शक्तिः, तद्बन्धनमात्रे काचित् शक्तिः, सा च मुहूर्तमात्रावधिका। 'स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च। विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म' इति ऋष्युक्तिः 'दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया। वनं राक्षसराजस्य दर्शनार्थं विनाशितम्', 'ग्रहणे चापि रक्षोभिर्महान्मे गुणदर्शनः। राक्षसेन्द्रेण संवादस्तस्माद् गृह्णन्तु मां परे', 'रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे' 'राजानं द्रष्टु-

कामेन मयास्त्रमनुवर्तितम्' इति श्लोकयश्च भाव्याः। 'बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः' इति राक्षसैर्बन्धान्तरे कृते, 'स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान्। अस्त्रबन्धस्स चान्यं हि न बन्धमनुवर्तते' इत्युक्तरीत्या मुहूर्तावधेः पूर्वमेव बन्धात् मोक्षोऽभवत्। 'काममनुवर्ततां हनुमान्स्वबन्धं, नाहं बन्धान्तरप्रयोजनहनुमद्बन्धमनुवर्तेय' इत्यत्रास्य भावो व्यज्यते 'न बन्धमनुवर्ततेऽस्त्रबन्धः' इति। वल्कादिबन्धनक्षण एव अस्त्रबन्धः स्वयं मुमुचे। तदनन्तरं अस्त्रबन्धस्यानुवर्तनं स्वयमेवान्वभाव्यत हनुमता रावणदर्शनसंवादादिप्रयोजनोद्देशेन। इदं च समुपागमत् इति समुपोपसर्गाभ्यां व्यज्यते। 'तस्यैते कथिता सर्वाः प्रकाशन्ते महात्मनः' इति श्वेताश्वतरोपसंहारमन्त्रे कथिताः अकथिताः इत्युभयथापि पदच्छेदो ग्राह्यः। गुरुणोकेन अभिधावृत्त्याऽकथिताः व्यञ्जनावृत्त्या व्यक्तिताश्चार्थाः व्यक्ता भवन्ति शिष्यस्य ॥

(मू) अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहादरात्।
मर्षयन् राक्षसान्वीरो यन्त्रिणस्तान् यदृच्छया ॥ 75

ततो दग्ध्वा पुरीं लंकामृते सीतां च मैथिलीम्।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ 76

यन्त्रिणो राक्षसान् वीरो मर्षयन् यन्त्रणं स्वस्यैवानुकूलं अस्त्रबन्धान्मोक्षसम्पादनेन। यदृच्छया—स्वप्रयत्नं विनैव मोक्षणं लभ्यते। पैतामहादरात् मुहूर्तावधिकत्वं लब्धम्। यन्त्रिभिस्तु पूर्वमेवोन्मोचनं सम्पादितं बन्धान्तरैर्यन्त्रणेन। तत्रापि हनुमत्प्रयत्नं विना शत्रुप्रयत्नेनैवोन्मोचनं निर्वृत्तम्। ब्रह्मास्त्रबन्धान्मोचितोऽपि राक्षसैः शणकादिभिर्बन्धनमन्ववर्तत। तदमर्षयत्। तस्य राक्षसराजदर्शनानुकूलत्वात् अनन्तरं लंकादर्शनानुकूलत्वाच। 'ततो दग्ध्वा

पुरीं लंकामृते सीतां च मैथिलीं । ततः इत्यस्य 'अनन्तरं' राक्षसैर्यन्त्रणात् इति चार्थः । 'वेष्टयन्ति स्म लांगूलं जीर्णैः कार्पासकैः पटैः' इति दहनार्थं कृतं यन्त्रणं च ग्राह्यम् । तैलेन अग्निना संयोजनं च वर्णितम् । 'छित्वा पाशान् समुत्पत्य हन्यामहमिमान्पुनः । किन्तु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् । लंका चारयितव्या वै पुनरेव भवेदिति' इत्युक्तं सहनं च सूच्यते । मर्षयन् यन्त्रिणः इति लंकादहनोपकारकयन्त्रणादिकमपि ग्राह्यम् । 'सहस्त्रीबालवृद्धाश्च जग्मुः प्रीता निशाचराः । 'स भूयः संगतैः क्रूरैः राक्षसैर्हरिसत्तमः । निबद्धः कृतवान्वीरः तत्कालसदृशीं मतिम् ।' इत्युत्तमवीरोपि मर्षयामास । ऋते सीतां च मैथिलीम्—'विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते । लंकायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी' इति हनुमतः निर्वेदशोकादिकं प्रथममुत्पन्नं; 'अथवा चारु सर्वांगी रक्षिता स्वेन तेजसा । न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते । न हि धर्मात्मनस्तस्य भार्याममिततेजसः । स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः' इति स्वेनैव शमितम् । 'अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति' इति च पुनरुवाच । अथोपीच चारणानाममृतोपमां वाचम् 'दग्धेयं नगरी सर्वा सट्टाकारतोरणा । जानकी न तु दग्धेति विस्मयोऽद्भुत एव नः' इति । इदं सर्वं सूच्यते ऋते सीतां च मैथिलीं इति । चारणवाक्यश्रवणमात्रेणातृप्तः 'प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार' । प्रथमदर्शनं नालं रामाय सीताक्षेमप्रियमाख्यातुम् । लंकादहनानन्तरं पुनर्दृष्ट्वा 'दृष्टा सीते' त्याख्यातुं प्रतिययौ । सीतां पुनर्दृष्ट्वा रामसन्निधिं पुनरायात ।

( मू ) सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ 77

महात्मानं रामम्—'अहं वेद्मि महात्मानं रामं' इति महर्षिणा विश्वामित्रेण, 'सर्वलोकशरण्याय राघवाय महात्मने' इति शरणवरीतृ-विभीषणेन चोक्तं सर्वलोकाधिपत्यं निरुपमगांभीर्यकारुण्यादिकं च द्योतितं महात्मविशेषणेन । अभिगमनप्रदक्षिणनमस्कारादिभिः पूज्यो महात्मा, 'महान्—आत्मा' इत्युपनिपद्गम्यः । महात्मानं रामं अमेयात्मा महाकपि-रभ्यगच्छन् । न्यवेदयत् समर्पयामास दृष्टा सीतेति तत्त्ववार्ताम् ॥

(मू) ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ 78

सीतादर्शनश्रवणोत्तरक्षण एव लंकाभियोगरावणयुद्धमतिः समजनि । सीतादर्शनवार्ताश्रवणानन्तरक्षणमात्रविलम्बोपि न सह्यते । 'दिष्ट्या स कुशली रामो धर्मात्मा सत्यसंगरः' इति हनुमतोक्ता सीता, 'कुशली यदि काकुत्स्थः किं न सागरमेखलाम् । महीं दहति कोपेन युगान्ता-ग्निरिवोत्थितः' इत्यपृच्छन् । 'न त्वामिहस्थां जानीते रामः कमललोचनः । तेन त्वां नानयत्याशु शचीमिव पुरन्दरः । श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः । चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् । विष्टम्भयित्वा बाणौघै-रक्षोभ्यं वरुणालयम् । करिष्यति पुरीं लंकां काकुत्स्थः शान्तराक्षसान्' इत्युत्तरितं हनूमता । तच्च निवेदितं रामाय । तथैव क्रियते । सुग्रीव-सहितः । 'सुग्रीव' इति तस्य महती चमूरपि लक्ष्यते । 'ततो वानर-राजेन लक्ष्मणेन च पूजितः । जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् । एकेन हनुमद्वाहनेन जग्मतुः भ्रातरौ । रामाऽविनाभूतो लक्ष्मणः । तदुभयाविनाभूतो हनूमान् । निर्दिष्टेन रामेण लक्ष्मणोपि निर्दिष्टो भवति । महोदधेः इति पदमेव निवेदितं 'प्रतिशिश्ये महोदधे'रिति पयोधिपुलिन-शयनवर्णने । शराः आदित्यसंनिभाः । सागरशोषणसमर्थाः । बहवः

आदित्या एव सागरजलान्तःप्रविष्टाश्चेत् सद्यः शुष्येन्महोदधिः। न समुद्रस्य नाशने दृढसंकल्पः। क्षोभणमात्रं संकल्पयामास तन्मात्रमलं तस्यौद्धत्यं शमयितुमिति। 'अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम्। महार्णवं क्षोभयिष्ये' इति संक्षेपानुसारि काव्यम्॥

(मू) दर्शयामास चात्मानं समुद्रस्सरितां पतिः।
समुद्रवचनाच्चैव नलं सेतुमकारयत्॥ 79

भगवदागमनावसर एव प्रत्युद्गमनं कार्यं समुद्रराजेन। समुद्रतो नात्मानं दर्शयामास। देवतासहजमदृश्यत्वमवलम्ब्य। क्रूरक्षोभणानन्तरमेवात्मानं दर्शयामास। द्वे रूपे समुद्रस्य। प्राकृतसागररूपं बाह्यम्। ततोऽप्यान्तरं देवतारूपं दिव्यम्। दिव्यरूपविशिष्टः आत्मा 'आत्मना' इति निर्दिश्यते। पूर्वं प्राकृतं बाह्यरूपमेव दर्शयामास। 'ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः। उदयन् हि महाशैलान्मेरोरिव दिवाकरः', 'समुद्रः प्रत्यदृश्यत। स्निग्धवैडूर्यसंकाशः जाम्बूनदविभूषितः' इत्यादिकं भाव्यम्। सागरमध्य एव वसेत् सागराधिष्ठातृदेवता सागरराजः। आत्मा मध्यकायः। स्वमध्यकायात्स्वात्मा उत्थितः। समुद्रः आत्मानं दर्शयामास—मुद्रा चाञ्जलिमुद्रा। साञ्जलिरात्मानं दर्शयामास। 'सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान्। अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम्' इति काव्ये समुद्रशब्दव्यंग्यार्थो विवृतः। 'समुपक्रम्य, पूर्वमामन्त्र्य' इत्यनेन पूर्वभाषित्वव्रतनियमवतो राघवात् पूर्वमेव प्रथमं बभाषे अपराधक्षापणायेति व्यञ्जितम्। शरपाणिनं प्राञ्जलिपाणिरुवाच। 'प्रयस्त्रमञ्जलिरसौ तव निग्रहाले' इत्यादिकं भाव्यम्। प्राञ्जलिसमा मुद्रा निग्रहसंकल्पस्य सद्योऽपनयने। सरितां पतिः स्वपत्नीसमावृतः आगत्य प्राञ्जलिरब्रवीत्। सपत्नीकः शरणं ययौ। सर्वाः पुण्यनद्यः भर्तारं पर्यवारयन् शरणवरणे।

मिर्नानारूपाभिरीश्वरः । गङ्गासिन्धुप्रधानाभिरापगाभिस्समावृतः' इत्यादिकं भाव्यम् । 'सरितां पति'रिति प्रयुज्यते, न सरित्पतिरिति अलुगाश्रीयते पत्नीनामविनाभावनियमं द्योतयितुम् । 'सहाधिकारः', 'सहत्वं सर्वकर्मसु' । एकैव पत्नी स्त्री अलं कृपोत्तम्भनाय । सर्वाः पत्न्यः भर्त्रा सह क्रुद्धं राघवमुपतस्थिरे । सरित्पतिरित्युक्ते सर्वसरितां साहित्यं नियतं न सिद्ध्येत् । पत्न्यश्चेमाः जगन्मङ्गलाः पुण्यसरितः । तासां माङ्गल्यहानौ विश्वस्य महती माङ्गल्यहानिस्स्यात् । 'अपां पत्युः शत्रूनसहनमुनेर्धर्मनिगडं कृपे काकस्यैकं हितमिति हिन्वन्ति स्म नयनं' इति दयाशतकश्लोकव्याख्यानेऽस्य विस्तरो द्रष्टव्यः । 'तस्मिन्दग्धे तदा कुक्षौ समुद्रस्सरितां पतिः । राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् । अयं सौम्य नलो नाम तनुजो विश्वकर्मणः । एष सेतुं महोत्साहः करोतु मयि वानरः' इति काव्यश्लोकेषु एतत्संक्षेपश्लोकानुसरणं रम्यम् । सेतुर्निर्धर्मगल्यम् । विश्वकर्मणः पुत्रेण नलेन तन्निर्माणं प्रार्थयामास । समुद्रवचनाच्चैव— न बलात्कारेण, किन्तु तत्पूर्णसमत्या तद्वचनेनैव । एषः नलः मयि सेतुं करोतु इति समुद्रवचनं काव्ये निबद्धमेव मूलव्यञ्जितम् । नलः सेतुं करोतु इति वचनमेवं अणिकर्त्तासणौ इति सूत्रमनुसृत्य नलं सेतुमकारयत् इति भवेत् । मूले णिचा निर्दिष्टं अणिनिर्दिश्यते काव्ये । संक्षेपे णिचा निर्देशः ॥

> तेन गत्वा पुरीं लंकां हत्वा रावणमाहवे ।
> रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ 80

**तेन** सेतुना लंकां गत्वा रावणमाहवे इति श्लोकार्धेन निर्देशेन त्र्यहोमात्रनिर्वृत्तलंकायुद्धस्य नातिचिरत्वं व्यज्यते । लंकायां हनूमद्युद्धं पादैस्त्रिभिः प्रदर्शितम् । रामरावणयुद्धमेकेन पादेन संक्षिप्तम् । ल्यपा निर्देशश्च सीताप्राप्त्यंगताव्यञ्जनाय । रामः सीताम् इति दम्पत्योरत्र सह

निर्देशो रस्यः । सीतां प्राप्य तदनु परां व्रीडामुपागमत् । सीता रामेण प्राप्ता । तदनु परा व्रीडा प्राप्ता ॥

तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ 81

व्रीडया परिवृतोऽभूद्रामः । व्रीडा च जनापवादभिया । व्रीडया सीतारामौ अन्तरितौ । तामुत्सार्यैव सीतासंयोगो लभ्यः । जनापवादापनोदनेन व्रीडोत्सारणं संभवेत् । तदपनोदनं च जनप्रत्यायनेन भवेत् । तत्प्रत्यायनं च प्रत्ययिताप्ततमसाक्ष्येण । भगवान् वैश्वानर एव सतीशुद्धौ प्रत्ययिततमः साक्षी । जनसंसदि अग्नावात्मानं शोधयेति परुषमुक्ता सीता । 'जनसंसदी'ति लोकप्रत्यायनकांक्षैव परुषवदने निमित्तमिति द्योत्यते । 'उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने' इत्युपक्रम्य 'सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः । वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम्' इति ब्रह्मादिदेवैः आर्षेण इतिहासस्तवेन ज्ञापिते, 'विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव । न किंचिदभिधातव्यं अहमाज्ञापयामि ते ॥' इति देवानां मुखेनाग्निनाऽऽज्ञप्ते च 'अवश्यं त्रिषु लोकेषु न सीता पापमर्हति । दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा । बालिशः खलु कामात्मा रामो दशरथात्मजः । इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि । अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम् । अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् । प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः । उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम्' इति रामोक्तमवधेयम् । सा—अग्न्यादीनां शुध्यापादिका । सीता देवयजनसंभवा । 'यज्ञो वै विष्णुः' विष्णुभूमिसंभवा । ज्वलनं विवेश—तत्प्रवेशेन अग्नौ अधिका शुद्धिः तेजश्चाभवत् । ज्वलननाम अन्वर्थमभवत् । सती—सद्विद्याप्रतिपादितसतः पत्नी । अग्न्यादिसर्वात्मिका अग्निशरीरिका सीता । तदात्मकोऽग्निः । 'यस्याः

अग्निः शरीरं, या अग्नौ तिष्ठन्ती अग्नावन्तरा यमयति' 'अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति' 'नाग्निरग्नौ प्रवर्तते' इति लंकादहने हनुमदुक्तमपि भाव्यम्॥

(मू) ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम् ।
बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ 82

अग्निवचनं शोधकपरीक्षकवचनम् । प्रत्ययिततमसाक्षिवचनम् । 'अग्निमुखा वै देवाः' । अग्निवचनं सर्वदेववचनम् । कामुकपापिष्ठरावणांकस्पर्शरूपकल्मषमग्निस्पर्शेन शुध्यति । आकस्मिकस्यास्पृश्यस्पर्शकल्मषस्य विशोधकोऽग्निस्पर्शः । अग्निवचनं जनसंसदि प्रयुक्तम् श्रोतृलोकप्रत्यायकम् । ज्ञात्वा—अन्तर्भावितणिच् । ज्ञापयित्वा इत्यर्थः । बाह्यस्पर्शदोषापनयनं ज्ञात्वेति चार्थः । बभौ रामः संप्रहृष्टः—अधिकं बभौ रामः; निरतिशयहर्षसमन्वितोऽभूत् सीतायाः विशुद्धौ लोकस्य विश्वासजननेन । 'समेत्य रामः प्रियया महाबलः सुखं सुखार्होऽनुबभूव राघवः' इति अपेक्षसर्गान्तश्लोको भाव्यः । 'समेयिवान् उत्तमराजकन्यया । अतीव रामः शुशुभे' इति सीता विवाहानन्तरं बालकाण्डान्तिमश्लोके गीतम् । सीतासमन्वयेन अतीव शुशुभे । तत्समन्वयस्य विच्छेदोऽभूत् । रावणवधानन्तरमपि जनापवादशंकया विच्छेदः । इदानीं पुनरपि सीतया समेयिवान् अतीव बभौ, महर्षमतुलं लेभे समेत्य रामः प्रियया इत्येतस्मिन्नवसरे सीताप्रतिग्रहे बालकाण्डान्तिमसर्गश्लोकदृष्टशोभाप्राप्तिसाम्यं व्यज्यते । बभौ संप्रहृष्टः इति संक्षेपश्लोके च तदेव व्यज्यते । सीतया देव्या शक्त्या समेत्य महाबलोऽभवत् । दैवतं पूजयेयुर्मनुष्याः । भगवद्वतारहस्यप्रकाशवतां सतां दैवतं सीतासमेतं रामं 'नमः सीतासमेताय' इत्यपूजयन् । पूजितः सर्वदैवतैः—महेश्वरेण दिष्ट्या कृतमिदं कर्म त्वया शस्त्रभृतां वर' इति पूजितः 'शस्त्रभृतां वर' इति महेश्वरोक्तं रामश्लाघावचनमनुगीतं कृष्णेन 'रामः शस्त्रभृतामह'मिति । न, पितृ-

समानं दैवतं रामबुद्ध्या । पितैव प्रत्यक्षं दैवतं तस्य । इतरदैवतानि न प्रत्यक्षाणि । 'यतो मूलं नरः पश्येत् प्रादुर्भावमिहात्मनः । कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते' इत्युक्तं रामेण मातरं प्रति 'मातृदेवो भव' इति पितुरप्यभ्यर्हिततरात्वेन मातृदेवताऽनुशिष्टा, ततः पितुर्नियोगं तिरस्कृत्याऽऽयोध्यायामेवोषितव्यमिति स्वनियोग एवानुसरणीय इति वादिनीं मातरं प्रति । महेश्वरेण महता दैवतेन पित्रा दशरथेन सर्वोत्तमदैवतेन इतरैस्सर्वदैवतैश्चेत्यर्थः । न जनसंसन्मात्रं तत्र, सर्वदेवतसंसदपि तत्रासीत् ॥

(मू) कर्मणा तेन महता त्रैलोक्यं सचराचरम् ।
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८३

कर्मणा तेन इति, व्यवहितत्वेपि लोकत्रयकंटकभूतरावणवधोपि ग्राह्यः । 'दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः । अपावृत्तं त्वया संख्ये राम रावणजं भयम्' इति महेश्वरोक्तं भाव्यम् । रावणवधादपि महत्तरं सीताप्रतिमहत्कर्म । सीतां विना का प्रतिष्ठा रामस्य । सीतारामावुभावपि दैवतं लोकस्य । तयोः परदेवतात्वं व्यासज्यवृत्ति । सीतासंयोगेनैव कारुण्यादीनां महागुणानां प्रभूतता । रूपिणी करुणेव सा । 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा' । त्रैलोक्यं सचराचरम्—सदेवर्षिगणम् अत्र समासेन लोकत्रयसमाहारो निर्दिश्यते । राघवस्य महात्मनः—'सर्वलोकशरण्याय राघवाय महात्मने' इति राघवशरणागतिवचनरीतिः । 'शरण्यं शरणं जग्मुर्नारायणमनामयं' इति सर्वे देवाः शरणं ययू रावणभयनिवृत्तये बालकाण्डारंभे । 'ते वयं भवता रक्ष्याः भवद्विषयवासिनः ।' इत्यारण्यकाण्डारंभसर्गे ऋषिगणाः शरणं जग्मुस्तद्भयनिवृत्तये । देवर्षिगणेभ्यो दत्तमभयमिदानीमेव सम्पूर्णं निर्वर्तितम् । सदेवर्षिगणं तुष्टम् इत्यस्यानन्तरं राघवस्य महात्मनः इति निवेशनेन शरणागतेभ्यस्तेभ्यो दत्तमभयं स्मारयति । तस्मात्

निवेशनेन राघवाय महात्मने इति शरणप्रार्थनाकर्तृविभीषणविषयानन्तर- श्लोकेपि बुद्धिसन्निधानाय ॥

अभिषिच्य च लंकायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ 84

पूर्वश्लोके सर्वलोकशरण्येन राघवेण महात्मना दत्तस्याभयस्य पूर्ण- निष्पत्तिः तेन च त्रैलोक्यस्य सचराचरस्य तुष्टिश्च वर्णिता । अत्र 'राघवाय महात्मने निवेदयत मां क्षिप्र'मिति शरणागतविभीषणाऽभिषेकसंजाता रामतुष्टिर्वर्ण्यते । सदेवर्षिगणं त्रैलोक्यं तुष्टम् । नाद्यापि रामस्तुष्टः । न केवलं न तुष्टः किन्तु महता ज्वरेण संज्वरित एवासीत् । तज्ज्वरनिवृत्ति- रत्रोच्यते । लंकायामभिषिच्य--पूर्वं सागरतीरेऽभिषिक्तो लक्ष्मणेन 'समुद्रात् जलमानय । तेन चैनं महात्मानमभिषिञ्च विभीषणम् ।' राजानं रक्षसां क्षिप्रम्' इति रामादेशमनु । तच्च तदानीं न यथार्थम् । सत्यसंकल्पत्वात् ध्रुवभावि- तयोक्तं तत् । सागरतीरे संकल्पमात्रेणाभिषिच्य इदानीं तत्त्वतोऽभिषिच्य । देवेन्द्र! देवराज्ये इदानीं पुनरभिषिक्त इवाभूत् इन्द्रजिद्रावणादिवधेन । राक्षसेन्द्रम्-इति रावणादौ व्यवहारे इन्द्रशब्दः औपचारिकः । राक्षसेश्वरत्व- मेव रावणस्य । विभीषणस्य प्रकृतयः जातितो राक्षसत्वेपि नाऽसुरप्रकृतयः किन्तु देवप्रकृतयः । दैवप्रकृतिराक्षससजातीयाना- इन्द्रो विभीषणः । स्वप्रकृतिभूतराक्षसानां तु रञ्जको राजा । कृतकृत्यस्तदा—तदैव कृतकृत्यत्व- बुद्धिः । तदा रामः -- तदैव रमणवानभवत् । तत्पूर्वं ज्वरपीडित एव । इदानीं विगतज्वरोऽभवत् । शीतजलस्नानं ज्वरनिवृत्त्युपलक्षकम् । विभीषणस्य स्नापनेन रामस्य ज्वरो न्यवर्तत । 'ज्ञानी त्वात्मैव मे मतम्' इति न्यायेन रामस्यात्मैव विभीषणः । विज्वरः प्रमुमोद ह--न केवलं ज्वरतापनिवृत्तिः किन्तु निरतिशयप्रमोदानुभवः ॥

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ 85

**देवताभ्य** इति बहुवचनं कपिञ्जलाधिकरणन्यायेन तिसृषु देवतासु विश्राम्यति । षडर्धनयनः श्रीमान् महेश्वरः, पितृदेवता—दशरथः, सुरनायकः इन्द्रश्च । तिसृभ्योऽप्येताभ्यो देवताभ्यो वराः लब्धाः । 'श्री रामो राम रामेति' कीर्तयन्नेव रममाणो महेश्वरः पितरं दशरथं स्वर्गादवतीर्णं विमानस्थं दर्शयामास । महान्तं प्रसादमकरोन्महादेवः । आशिषश्च दत्तस्तेन । महादेवप्रसादाच्च पित्राऽयं समागमः इति रामेणैव सन्दिश्यते भरताय हनुमन्मुखेन । 'भ्रातृभिस्सह राज्यस्थो दीर्घमायुरवाप्नुहि' इत्याशिषमाशशास पिता । 'सपुत्रां त्वां त्यजामीति यदुक्ता कैकेयी त्वया । स शापः कैकेयीं घोरः सपुत्रां न स्पृशेत् प्रभो' इति पितरं वरं प्रार्थयामास रामः । महाराजः सः 'तथे' ति कृताञ्जलिं राममुवाच । महानयं प्रसादो रामस्य । 'कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति । रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा' इति सीतासान्त्वनं कृतं मान्येन श्वशुरेण । अयं च महाप्रसादो रामस्य । तदनन्तरमिन्द्रेण 'ब्रूहि यन्मनसेच्छति' इत्युक्तो रामः 'यदि प्रीतिस्समुत्पन्ना मयि सर्वसुरेश्वर । वक्ष्यामि कुरु ते, सत्यं वचनं वदतां वर ॥ मम हेतोः पराक्रान्ताः ये गता यमसादनम् । ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः' इति वरं प्रार्थयत् । 'समुत्थास्यन्ति हरयः ये हता युधि राक्षसैः । ऋक्षाश्च सहगोपुच्छाः निकृत्ताननबाहवः । नीरुजो निर्व्रणाश्चैव संपन्नबलपौरुषाः । समुत्थास्यन्ति हरयः सुप्ताः निद्राक्षये यथा' इतीन्द्रेण वरदानोक्तौ 'ततः समुत्थितास्सर्वे सुप्त्वेव हरिपुङ्गवाः' इति सर्वेषां समुत्थानमुक्तम् । **समुत्थान** पदप्रयोगश्च संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिच्छन्दोगवचनस्मारकः । समुत्थाप्य च वानरान् इति गुरुणा प्रयुक्तः शब्दः । सुप्तानिव समुत्थाप्य इति गोविन्दराजव्याख्या रस्या । व्यञ्जितोऽयमेव

भावः विवृतः काव्ये 'ततः समुत्थिताः सर्वे सुप्त्वेव हरिपुंगवाः' इति। 'देवताभ्यो वरप्राप्त्या समुत्थाप्य सुहृद्वृतः'। वानराः राक्षसाश्च सुहृदः। 'सुहृदं सर्वभूतानां' इति गीतावचनस्फोरितः भगवत्स्वभावः। **पुष्पकेण अयोध्यां प्रस्थितः**—कुबेरस्य पुष्पकं रावणतत्परिवारवहनेन मलिनितं पवित्रीकृतमिदानीं सर्वलोकानामेव पावनस्य ससीतस्य रामस्य तत्सुहृत्परिवारस्य च वहनेन ॥

भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः।
भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ 86

भरतकृतशरणागतिरेकैव नाद्यापि फलवती। महत्कृत्यशेषमवशिष्टम्। कदा कदा इति रामागमनमाकांक्षन्नास्ते नन्दिग्रामे भरतः। देवशरणागत्या पूर्वकृतया चतुर्दशवर्षावधित्वेन विलम्बस्समभवनि, शरणागतिद्वयस्य फलयोर्नियतविरुद्धत्वात्। चतुर्दशवर्षपूर्त्यनन्तरं न विलम्बलेशोपि सह्येत भरतेन। अयोध्यायां भरतस्य हुताशनप्रवेशो भवेत्। यद्यप्ययोध्यैव गन्तव्या पुष्पकेण मध्ये विलंबं विना; यद्यप्ययोध्यामेव प्रस्थितः, मध्ये भरद्वाजाश्रममगमदित्युच्यते भरद्वाजाश्रमं गत्वा रामः इति। भरद्वाजाश्रम एव प्रथमः ऋष्याश्रमः अयोध्यातो वनप्रस्थाने। सन्निकृष्टश्च स आश्रमः अयोध्यायाः। 'शत्रुहन्तारं महर्षीणां सुखावहं' इति महर्षीणां सुखायैव शत्रुरावणादिहननम्। एकोपि महर्षिरवश्यं संभावनीयः अयोध्याप्राप्तिपूर्वमेव। अगस्त्याद्याश्रमाः विप्रकृष्टाः। किष्किन्धायां कश्चिद्विलम्बः कृतः तारादिसर्ववानरस्त्रीणामारोहाय। 'स्वदारसहितास्सर्वे ह्ययोध्यां यान्तु सीतया' इति सपत्नीका एव वानराः अभिषेकमहोत्सवहर्षमागिनश्चिकीर्षिता रामेण। वानराः सीतान्वेषणरावणयुद्धार्थे स्वस्त्रीभिर्विरहिताः। तैरपि सपत्नीकैरागन्तव्यम्। सहसीतं पट्टाऽभिषेकोत्सवः। अकृतदारश्चेत् हनुमद्वत्, एक आयातु।

'देवतिर्यङ्मनुष्येषु पुंनामा भगवान्हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्' इति भगवान् पराशरः तिर्यक्षु स्त्रीणां लक्ष्मीत्वं ज्ञापयति। 'राघवत्वेऽभवत् सीता' इति च तद्वचनम्। अत्रापि 'सीता लक्ष्मीर्भवान्विष्णुः' इति ब्रह्मादिदेवैरुक्तम्। वानर्यः आत्मान एव सीतायाः। कथं तदात्मभूतास्तदभिषेकोत्सवेऽसन्निहिता भवेयुः। सीतापट्टाभिषेको भविष्यतीति रामस्य बुद्धिः। भरद्वाजाश्रमे पुष्पकादवरोहणे रामस्य बहवो भावाः। 'स्त्रीतृतीयं च्युतं राज्यात् धर्मकामं च केवलम्। पदातिं त्यक्तसर्वस्वं पितुर्वचनकारिणम्। सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम्। दृष्ट्वा तु करुणापूर्वं ममासीत्समितिंजय' इति महत्या करुणयाऽऽविष्टोऽभवन्मुनिः। तस्य प्रीतिर्जनयितव्या। 'साम्प्रतं सुसमृद्धार्थं समित्रगणबान्धवम्। समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा' इत्यनुत्तमा प्रीतिर्जनयितव्या. तस्य तद्दर्शननमस्काराऽऽतिथ्यग्रहणादिभिः। वाल्मीक्यन्तेवासी 'भरद्वाजः'। रामायणकाव्यप्रणयनारंभे 'अकर्दममिमं तीर्थं भरद्वाज निशामय' 'शिष्यं चैवाब्रवीद्वाक्यमिदं च मुनिपुंगवः। पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः। शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा। शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम्। प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः', 'भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् गुरोः', 'स प्रविश्याश्रमपदं शिष्येण सह धार्मिकः। उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः' इत्यादिश्लोकाः इह मान्याः॥

'मानिषादे'त्यादिश्लोकोच्चारणावसरे सन्निहितः भरद्वाजः शिष्यः। स च तच्छ्लोकप्रथमाभिनन्दकः। ब्रह्मा च द्वितीयः। नारदागमे तत्संक्षेपप्रवचने च सन्निहितः शिष्यः। ब्रह्मागमने 'वृत्तं कथय वीरस्य यथा ते नारदात् श्रुतं' इति तदा देशावसरे ब्रह्मादेशमनुक्रम्य द्वितीयसर्गान्तं 'कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्' इति रामायणनिर्माणसंकल्पने, काव्य-

तृतीयसर्गे रामायणकथायाः धर्मवीर्यणान्वेषणे, संक्षेपतस्तत्कथासंग्रहणे च सन्निहितः शिष्य. । 'प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवान् ऋषिः । चकार लल्तिं कृत्स्नं विचित्रपदमालवान्' इति पट्टाभिषेकोत्सवदिनानन्तरमेव रामायणं निर्ममे । नारदागमनं, नदीस्नानं, नदीनीरोद्यानपर्यटनं, मानिपादश्लोकप्रनिभानम्, तद्व्याहरणं, ब्रह्मागमनं, इत्येतत्सर्वमभिषेकानन्तरवृत्तम् । बहुदिवसैः काव्यं रचितं स्यात् । तत्काले च भरद्वाजः सन्निहितः । अभिषेकाव्यवहितपूर्वं शिष्यभरद्वाजाक्रमेऽनरोहणमुचितमेव । 'रावणेन हृता भार्या' इत्यारभ्य, 'समागमश्च त्रिदशैः यथा दत्तश्च ते वरः' इत्यन्तं पञ्चभिः श्लोकैः भरद्वाजेनैव कथासंक्षेपस्यायसरस्समभूत् । पञ्चम्यां पञ्चभिः श्लोकैः काण्डत्रयस्य गुरुनारदसंक्षेपात्सूर्वमयं शिष्यकृत संक्षेपः । भरतहनुमत्सन्निधौ हनुमत्संक्षेपस्याप्यवसरो भवति । हनुमान् वक्ता । भरतशत्रुघ्नौ श्रोतारौ । अलभ्यलाभस्तयोर्लोकस्य च । अलभ्य. श्रोतृलाभ कल्याणभाषिणो हनूमत । वेण्युद्ग्रथनेन प्राणत्यागोद्युक्ता सीता 'संश्रवे मधुरं' हनुमत्कीर्तनं शुश्राव । चतुर्दशवर्षपूर्तिदिने शुश्राव हनुमन्मधुरकीर्तनं हुताशनप्रवेशोद्युक्तो भरत, 'शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम्" इति । "अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर' इति वरदानोक्त आस्ते भरद्वाजः । अयोध्यायाः बहि. मार्गमध्ये शृंगिवेरपुरे गुह आस्ते । स च प्रत्यागमनवृत्तान्तं बोधनीय· । महता वानरराक्षससमूहेन सह तत्रावरोहणं नोचितम् । सीतारामाभ्यां सह गच्छन्त सुग्रीवविभीषणादय. सर्वे अयोध्याप्राप्तेः पूर्वं भरतादिभिस्सादरं प्रत्युत्थातव्या. । वसतयश्च सज्जीकर्तव्याः । 'प्रत्युद्ययौ ततो रामं महात्मा सचिवैस्सह' इति, 'सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा । सर्वे वादित्रकुशलाः गणिकाश्चापि संघश ' इत्यादिश्लोकैश्च प्रत्युत्थानं वर्ण्यते । 'सिञ्चन्तु पृथिवीं कृत्स्ना हिमशीतेन वारिणा । ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वश. । समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे । शोभयन्तु च

वेश्मानि सूर्यस्योदयनं प्रति । स्रग्दामभिर्मुक्तपुष्पैः सुगन्धैः पञ्चवर्णकैः' ॥ इति नगरसर्वरथ्यावेश्माद्यलंकारः कार्यः । न स्वस्योपचारं मनुते रामः । स्वेन सहागच्छन्तौ वानरराक्षसराजौ, सैनिकाश्च ईदृशोपचारैस्संभावनीयाः । असंख्येयानां वानराणां तत्प्रियफलादिकं संपादनीयमभ्यवहाराय । मधुर-मधुप्रियाः वानराः । सीतादर्शनरूपप्रियश्रवणसन्तुष्टाः मधुवनं प्रविश्य सुग्रीवाज्ञामप्युल्लंघ्य मधु पपुः । तेषां प्रियं मधु संपादनीयं वृक्षेभ्य एव प्रभूत-मधुस्रवः सम्पादनीयः तत एव वानरपानाय। संहृष्टो धीमान्वरमयाचत । 'अकाले फलिनो वृक्षाः सर्वे चापि मधुस्रवाः । फलान्यमृतकल्पानि बहूनि विविधानि च । भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः ॥' इति राम-प्रार्थना । तथेति च भगवता प्रतिज्ञाते पादपाः तत्र स्वर्गपादपसन्निभाः मधु-स्रवाः सर्वतो योजनानि त्रीणि वानराणां गच्छतामभवन् । 'ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव । 'कामादुपाश्नन्ति सहस्रशस्ते मुदान्विताः स्वर्गजितो यथैव' इति वानराणां अद्भुतफलाशनमधुपानजनित-प्रीतिर्वर्णिता । 'सदा फलान्कुसुमितान्वृक्षान्प्राप्य मधुस्रवान्'। भरद्वाजप्रसादेन मत्तभ्रमरनादितान् । तस्य चैष वरो दत्तो वासवेन परंतप । ससैन्यस्य तथा-तिथ्यं कृतं सर्वगुणान्वितम्' इति हनुमद्वचनम् । 'संगत्या भरतः श्रीमान् राज्यार्थी चेत् स्वयं भवेत् । प्रशास्तु वसुधां कृत्स्नां अखिलां रघुनन्दनः' इति रामबुद्धिः । भरतस्यांजसो भावः तत्त्वतोऽवगन्तव्यः । भरद्वाजः प्रथमं रामविषयभरतभावे शंकावानभवत् । 'पंकदिग्धस्तु भरतः जटिलस्त्वां प्रतीक्षते । पादुके ते पुरस्कृत्य' इति स्मितपूर्वमुवाच रघुश्रेष्ठं ऋषिः । भरतस्य भावशुद्धिस्तस्मात् श्रुता । तदनन्तरं भरतसकाशं प्रेषितो हनूमानपि 'भरतस्येंगितानि च तत्त्वेन मुखवर्णेन दृष्ट्वा व्याभाषणेन च' इति याथातथ्येन तन्मनोभावपरिज्ञाने आदिष्टः । 'भरद्वाजाश्रमं गत्वा रामः भरतस्यान्तिकं हनूमन्तं व्यसर्जयत्' इत्यनेन हनूमत्प्रेषणाय भरद्वाजाश्रमगमर्दित्वपि

व्यज्यते। 'अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि' इति हनुमद्वचनम्। पूर्वं पुष्ययोगे दशरथमनोरथो विघ्नितः। इदानीं पुष्ययोगः अविघ्नः क्षेमंकरो भवति। पुष्ययोगे निष्क्रान्तः पुष्ययोगे आगन्तुमर्हति। 'सूर्यस्योदयनं प्रति' इति भरतवचनेन रामसूर्यस्य सूर्योदयकाले प्रत्यावृत्त्यौचित्यं प्रदर्श्यते। 'पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः। भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम्' इति गुहं प्रति हनुमद्वचनम्। भरद्वाजाभ्यनुज्ञापूर्वकं वनवासव्रतं समापनीयम्। अयोध्या च प्रवेष्टव्या। अयोध्यावास्तव्यभरतसेनातिथ्यं कृतं पूर्वम्। इदानीं लंकाकिष्किन्धावास्तव्यसेनातिथ्यं क्रियते। भरद्वाजाश्रमात् भरताश्रमं ससैन्यो ययौ रामः। महर्षिर्भरतमंकमारोप्य विमानेन तदाश्रमं ययौ। पूर्वं चित्रकूटागतं भरतमंके आरोप्य तं पप्रच्छ। वनवासावसाने तथैव अंकमारोपयति भरतशर्मं रामसिंहः। भरतस्यान्तिकः सामीप्यभाक् रामभक्ते रामदास्ये च हनुमान्। भरतस्य नेदीयांसं तत्सदृशं भक्तं भरतसमीपं प्रेषयामास। तत्सदृशस्यैव तत्समीपप्रेषणमुचितम्॥

( मृ ) पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा।
पुष्पकं तत्समारूढ नन्दिग्रामं ययौ तदा॥ 87

पुनः शब्देन पूर्वमाख्यायिकाकथनं व्यज्यते। सीतायै पुष्पकेण लंकातः प्रत्यावृत्तिसमये तत्तत्स्थलप्रदर्शनपूर्वकं कथा कथिता। भरतं प्रति हनुमद्विसर्जनावसरे संक्षेपेण कथा कथिता रामेणैव। अत्र पुनः कथा कथ्यते। अत्र भरतकथा कथ्यते। 'तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु' इति रामबुद्ध्या भरत एव कथानायकः। भरतकथा रामायणम्। न रामकथा, न सीताकथा। भरतकथां जल्पति बाष्परुद्धकण्ठं महर्षिक्रव्यगतो रामः। रामजल्पनस्याऽव्यक्तत्वात् तत् न निबद्धमिव काव्ये। 'निस्वनः श्रूयते

भीम'. प्रहृष्टानां वनौकसाम्' इति वानरभीमनिस्वने तज्जल्पनं न सुश्रवमिव। नन्दिग्राम. इदानीमेवान्वर्थो भवति। मत्वर्थीयः इनिः अतिशायने। पूर्वं दुःखिग्रामः। 'श्रुत्वा तु परमानन्दं अगमत् भरतः'। इदं च नन्दिग्रामपदं अभ्यस्यतेऽनन्तरश्लोकारंभेऽपि ॥

(मू) नन्दिग्रामे जटां हित्वा भ्रातृभिस्सहितोऽनघः ।
रामस्सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ 88

'नन्दिग्रामे भ्रातृभिः सहितः जटां हित्वा'। चत्वारोपि जटाव्रतधारिणो जटिलाः। 'पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले। सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे। विशोधितजट. स्नातः' इति भरतादीनां स्नानानन्तरमेव रामस्स्नौ। जटाशोधनेपि भरतादिभ्रातॄणामेव पूर्वत्वम्। रामस्यैकस्यैव जटाधारित्वव्रतमनुशिष्टम्। भरतादयस्तु स्वेच्छया जटां धारयामासुः। तदिच्छाधृतं तद्व्रतम्। भ्रातॄणां जटाशोधनस्य स्वपूर्वमेव संविधानाभावे रामस्य दोष आपतेत्। भ्रातृजटाविशोधनस्य अनुलंघनीयस्वाज्ञया प्रथमनिर्वर्तनादेव रामस्य अनघत्वसम्पत्तिः। अनघशब्देनेदं व्यज्यते। भ्रातृभिस्तज्जटां हापयित्वा अनन्तरं स्वयं जटां जहाति। भ्रातृभिः जटाहाने स्वस्य साहित्यमुच्यते। साहित्यमात्रमुच्यते न यौगपद्यम्। विशोधितजटैः भ्रातृभिस्सहितः जटां हित्वा, 'सीतामनुप्राप्य' सीतालाभ एवाऽलभ्यलाभः। राज्यावाप्तिर्न तथा प्रधाना। पूर्वं राज्यं पित्रा रामाय दत्तम्। भरताय पित्रा पुनर्दत्तं न गृहीतं भरतेन। रामपादुकामेव राज्येऽभ्यषिञ्चद्भरतः। रामपादुकाराज्यं रामराज्यमेव। 'दत्तं राज्यमिदं तव' इति वदन् भरतः रामस्य राज्यं पुनस्तस्मै दत्तमिति व्यञ्जयति ॥

(मू) प्रहृष्टमुदितो लोकस्तुष्टः पुष्टस्सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ 89

रामस्य राज्यालाभे न तस्य तेन हर्षः, यतस्तेन दुर्धर्षः अविक्रियः सदैकस्वरूपो रामः। ऋषिभिस्तुल्यो रामः समदुःखसुखः। रामस्य राज्यप्राप्तौ लोको निरतिशयहर्षसमन्वितोऽभवत्। प्रहृष्टः मुदितः तुष्टः पुष्टः इति भूयोभूयः तत्सन्तोषातिशयः प्रदर्श्यते। आमयरोगदुर्भिक्षादिभयाद्यभावश्च निषेधविधया कथ्यते। 'वार्ता निरामयः कल्य उल्लासो निर्गतो गदात्' इत्यमरः। अरोग इति रोगात्यन्ताभावकथनमिव। निरामय इति प्रासादामयान्निर्गतत्वम्। पुनरुक्तत्वेपि अभ्यासेन प्रतिज्ञानदार्ढ्यं बोध्यते। दुर्भिक्षाद्भयं–दुर्भिक्षभयम्। न केवलं दुर्भिक्षावर्जितत्वं, किन्तु दुर्भिक्षाशंकापि न जायते। दशभिः श्लोकैः फलं पठ्यते। फलस्य विस्तरशः कथनमिष्यते। फलस्य संक्षेपोऽनुचितः। काव्ये अत्रोक्तं फलाख्यानं भूयसानुस्रियते। 'सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत्' इति सर्वमुदितत्वस्य सर्वधार्मिकत्वस्य सहपठनात् गुरोर्भावो व्यज्यते। सर्वे धार्मिकाः परस्परं नोपारुन्धन्। परस्परं मैत्रीमवलम्बिरे। तत्र च कारणमुच्यते 'राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम्' इति। सर्वेषां स्वात्यर्थरामप्रियत्वे कथमेकस्मिन्नपि तज्जने हिंसारुचिरुदियात्। इदमेव कारणमुक्तं प्रह्लादेन 'सर्वभूतात्मके तात जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्राऽमित्रकथा कुतः' इति। 'निरामया विशोकाश्च रामे राज्यं प्रशासति' इति काव्ये। आसन् प्रजा धर्मरताः रामे शासति नानृताः', 'सर्वे धर्मपरायणाः' इति च काव्ये। 'न व्याधिजं भयं चासीत् रामे राज्यं प्रशासति' इति च।

न पुत्रमरणं किञ्चित् द्रक्ष्यन्ति पुरुषाः क्वचित्।
नार्यश्चाऽविधवा नित्यं भविष्यन्ति पतिव्रताः॥ 90

'न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते'। 'न पर्यदेवन्विधवाः' इति काव्ये॥

न चाग्निजं भयं किञ्चित् नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किञ्चित् नापि ज्वरकृतं तथा ॥ 91

न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।

'निर्दस्युरभवल्लोकः नानर्थः कंचिदस्पृशत्' इति कव्ये ।

नगराणि च राष्ट्राणि धनधान्ययुतानि च ।
नित्यं प्रमुदितास्सर्वे यथा कृतयुगे तथा ॥ 92

सर्वेषु नगरेषु च धान्यागाराण्यभवन् । मुहुर्मुहुः उक्त्या सत्यत्वं गम्यते । संक्षेपे मुहुर्मुहुरुक्तिः च । रामनामोक्ताविव फलकथनेपि भूयानादरः ।

अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
गवां कोट्ययुतं दत्वा विद्वद्भ्यो विधिपूर्वकम् ॥ 93

असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ।

'यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः' यज्ञस्य दक्षिणा प्रधानभूता । नादक्षिणं यागमामनन्ति । गोसहस्रं दक्षिणा, सुवर्णं दक्षिणा 'यज्ञो वै विष्णुः' । यज्ञो रामः यज्ञं आत्मानं यजते । श्रेष्ठो रामो लोकं यज्ञाचरणधर्मे संप्राहयति ।

ब्रह्मैव लोकः ब्रह्मलोकः । आत्मानमेवाप्नोति । अवताररूपं विहाय पररूपो भवति । ब्रह्मैव सन् ब्रह्माप्येति ।

राजवंशान् शतगुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥ 94

धर्मस्य सेतुरयं धर्ममर्यादां परिपालयति । 'एष सेतुर्विधरणे लोकानामसंभेदाय' । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते पराम्' । 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति गीतोक्तयः विग्रहवद्धर्ममूर्तरामाचरितानुरोधिन्यः । नारदोक्तमनुसरति गीता ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ 95

'दशवर्षसहस्राणि दशवर्षशतानि च । भ्रातृभिस्सहितः श्रीमान् रामो राज्यमकारयत् ॥' इति काव्ये। 'रामो राज्यमुपासित्वा' इति ईश्वरेण रामेण अनारतं प्रजोपासनमुच्यते । 'तदुपासितव्यम्' इति रामोपासनं विधत्ते श्रुतिः । रामस्तु लोकमाराधयति । 'आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा' इत्युत्तरचरितनाटके । किमिदं नैच्यम्। किमिदं प्रजाप्रेम । ब्रह्मैव लोकः ब्रह्मलोकः । आत्मानमेवाप्नोति । अवताररूपं विहाय पररूपो भवति । ब्रह्मैव सन् ब्रह्माप्येति । 'दशवर्षसहस्राणि दशवर्षशतानि च । कृत्वा वसस्व नियतिं स्वयमेवात्मना पुरा। सत्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह ।' इति पितामहनियोगवचनं पठितमुत्तरकाण्डे चतुरुत्तरशततमे सर्गे । रामपट्टाभिषेकात्पवहितोत्तरमयं संक्षेपः कथ्यते नारदेन ॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् ।
यः पठेत् रामचरितं सर्वपापैः प्रमुच्यते ॥ 96

रामराज्ये प्रजानां सर्वसौख्यभाक्त्वं वर्णितम् । किन्तेनास्माकमिदानीन्तनानाम् । एतद्रामचरितसंक्षेपपठनेन सर्वपापैः प्रमुच्यन्ते । सर्व-

पापैः प्रमोचने मोक्षस्सिद्धयेत् । सर्वपापेभ्यो मोक्षणप्रतिज्ञानेन गीतोपसंहारः । एतत्संक्षेपपठितारः ध्रुवं सर्वलोकशरण्यं रामं शरणत्वेनाध्यवस्येयुः । अध्यात्मशास्त्रमिदं नारदमुखगलितं मधुरां रामब्रह्मभक्तिं रामतन्मयतापर्यवसानामादध्यात् । अध्येतारं राममूर्तं कुर्यात् ।

एतमाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ 97

इदमाख्यानं संक्षेपरूपमपि रामप्रापकम् । तत एव रामायणम् । स्वर्गशब्द इह मोक्षार्थकः । तत्रैव तच्छब्दस्य योगार्थपौष्कल्यम् । 'नरः' इति नरसामान्यस्यात्र संक्षेपे अधिकारो द्योत्यते । सर्वेषां नराणामेतद्रामायणाध्येतृणां मोक्षप्राप्तिस्साधारण्येन नियता । तच्चद्वर्णस्य मोक्षावराणि ऐहिकविशेषफलानि अनन्तरश्लोके कीर्त्यन्ते ॥

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिक् जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ 98

पूर्वश्लोके देहादुत्क्रान्त्यनन्तरं मोक्षप्राप्तिरुक्ता । मोक्षे सर्वेषां साम्यम् । न तत्र फलवैषम्यम् । इह लोके तत्तद्वर्णैः प्राप्यं फलमत्र कीर्त्यते । ईयात् इति चतुर्वारं पठ्यते । स्यादिति प्रथमपठितं सर्वत्रानुषञ्जनीयम् । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुत्युक्तरीत्या आनन्दमयराम-

मयोयं संक्षेपपठितः अस्तीति सद्भिर्व्यपदेश्यो भवेदिति व्यज्यते सर्ववर्णाधिकारिषु अनुपक्तेन स्यादिति पदेन। द्विजः श्रेष्ठवाक् सम्पन्नो भवति। अध्ययनाध्यापनयजनयाजनाचार्यकरणादिषु वागृषभत्वमुपकुर्यात्। सरस्वतीप्रियपुत्रो नारदो वाग्विदां वरः। तद्ग्रन्थपठनेन वाग्विदां वरत्वं लभ्यते। वागृषभत्वं प्रथमश्लोकोक्तवाग्विदां वरत्वमेव। इत्थं च उपक्रमोपसंहारश्लोकयोरभिरूप्यं विद्वद्रस्यम्। संक्षेपपठितॄणां सर्वक्षत्रियाणां भूमिपतित्वस्य न मुख्यतः प्राप्तिसंभवः। कथंचिदुपचारेण कियत्कियदल्पं वा भूरि वा लभ्येत। 'स्यादस्ति स्यान्नास्तीति' सप्तभंगीवाक्ये इव स्यादिति कथंचिदर्थे तिङन्तप्रतिरूपकमव्ययमिति श्रीगोविन्दराजः। पण्यविषये यत्फलं आशास्यते वणिग्भिः तत्फलं सिद्ध्येत्। पण्यविषयमनोरथः सफलो भवेत्। पण्यं लाभेन पणितं भवेत्। चतुर्थवर्णो महान् भवेत्। 'महत्त्वमीयात्' इति मांगलिकः उपसंहारः॥

शुभम्



श्रीः ।

## ॥ शुद्धिपत्रिका ॥

| Page | Line | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 1 | 7 | अद्भुततां | अद्भुतता |
| " | 8 | नुभूतां | नुभूता |
| 2 | 10 | रत्न व्यां | रत्नाढ्यां |
| 3 | 8 | सर्व | सर्वे |
| 7 | 1 | जिज्ञासुर्दशरथाय | जिज्ञासवे दे |
| 11 | 22 | स्वाध्ययोरत्यन्तं | स्वाध्यायर्यो |
| 12 | 14 | दानरूपमहातत्त्वस्य | दानशक्तिरूप |
| 13 | 24 | शो स्या | शोचस्या |
| 14 | 19 | गुरुपू | गुरुत्वपू |
| 16 | 3 | श्रीतुं | श्रोतुं |
| " | 6 | विपयसाश्चर्यं | विपयस्याश्चर्य |
| " | 7 | कुशल्यानुशि | कुशलानुशि |
| " | 23 | ब्रह्माभिज्ञानमुच्चार्य | ब्रह्माभिधानमुच्चार्य |
| 17 | 8 | विशिष्टै नरः | विशिष्टो नरः |
| 18 | 3 | प्रश्नारंभः | प्रश्नारंभः |
| " | 7 | युंक्तः | युक्तं |
| " | 8 | ये स्मया | ये त्वया |

| Page | Line | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 18 | 9 | बुद्धा ते | बुद्ध्वा तैः |
| ,, | 16 | पदेव | पडेव |
| 19 | 5 | भूलोकवर्ती पु | भूलोकवर्तिषु |
| ,, | 6 | लोकवर्ती | लोकवर्ती |
| ,, | 7 | दम्यौ | दन्यो |
| ,, | 15 | सढ श्रे | स उ श्रे |
| ,, | 16 | स्याधिय ामनसा | स्वया धियादेवयन्तः |
| ,, | 17 | मनीपिज्ञः | मनीषीज्ञः |
| ,, | 23 | र्थंह्वय | र्थंद्वयं |
| 20 | 2 | अर्भितो | अर्थितो |
| ,, | 4 | शोद्धत भूतवर्गः | शोद्धत भूतसर्गः |
| ,, | 9 | वसी | वशी |
| ,, | 11 | पुतः पुन | पुनः पुन |
| ,, | 21 | मास्शक्रदिति | माल्यकृदिति |
| ,, | 23 | रुमदया गुणा·····श्लोकीत्र | रूपदयागुण····श्लोकोऽत्र |
| 23 | 15 | रमस्य | रामस्य |
| ,, | 21 | प्रष्टर् | प्रष्टुर् |
| 24 | 17 | प्रदर्शित | प्रदर्शितं |
| 26 | 22 | ण्ठ्या स्मा | ण्ठ्यास्मा |
| 31 | 1 | संहि ता | संहिता । |
| ,, | 10 | वर्ण्यते | वर्ण्यन्ते |
| ,, | 22 | मदास्त्यं | मादास्त्यं |
| 33 | 8 | दारः | दाराः |

| Page | Line | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 33 | 17 | जनन्य | जनस्य |
| 35 | 17 | मित्यन | मित्यन |
| 37 | 24 | वरेण | वरणे |
| 39 | 23 | इति तम्य | इति तत् |
| 40 | 21 | विक्रया | विक्रिया |
| 44 | 16 | भूय यो | भावायो |
| 45 | 3 | पुष्पकेन | पुष्पकेण |
| 46 | 11 | गास्यासे | गास्यते |
| ,, | 18 | त्रापि वि | त्रामिवि |
| ,, | 19 | ना (आढा) | ना आढा |
| ,, | 20 | व्यज्यते। | व्यज्यते– |
| ,, | 21 | स्टत्राटा | स्यत्राटा। |
| 49 | 8 | तदा देशो | तदादेशो |
| 50 | 10 | वर्णिता | वण्तिा। |
| 52 | 22 | मक्ता | भक्त |
| 53 | 13 | काकुत्स्थ | ककुत्स्थ |
| 57 | 15 | नाभव्य | नाभय |
| 66 | 23 | जन्म | जन्य |
| 67 | 23 | पित्रानास | पित्रनास |
| ,, | ,, | माक् गृध्र | मागृध्र |
| 68 | 13 | आयु | आयु |
| 69 | 11 | परव | पराव |
| 71 | 1 | कश्चित् | अत्र "कार्पी" ति निर्देश कश्चित् |

| Page | Line | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 72 | 17 | सिद्धम | सिद्धिम |
| 76 | 5 | विदितः | विदितं |
| ,, | 20 | बद्धस | बद्धं स |
| 77 | 1 | धिकार | धिकारं |
| ,, | 18 | दत्तं सत्य | दत्तसत्य |
| 78 | 19 | शत्रं | शत्रुं |
| 80 | 1 | श्रतम् | श्रुतम् |
| 81 | 11 | सुग्रीवस्य | सुग्रीवः |
| 82 | 3 | ततो गर्ज | ततोऽगर्ज |
| 83 | 5 | रैवयं | रैवयेन |
| ,, | 6 | चित्यं च स्प | चित्यं स्प |
| ,, | 13 | जघान | जघान |
| ,, | 16 | साहय्यं | साहाय्यं |
| 86 | 6 | मुलंघ | मुलंघ |
| ,, | 17 | जटायोर्म | जटाय्वोर्म |
| ,, | 20 | करुणायाच्चा | करुणायाच्चा । |
| 87 | 12 | हलमतं | हनूमद्वत्स |
| ,, | 13 | सुकरम् | न सुकरम् |
| ,, | 18 | प्रयुक्ते | प्रयुङ्क्ते |
| ,, | 22 | समहा | समाहा |
| 88 | 4 | हनुमत्या | हनुमन् या |
| ,, | 8 | तेघौघ | तेजौघ |
| ,, | 14 | प्रस्थावेन | प्रस्तावेन |

| Page | Line | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 91 | 1 | ज्ञानैदूतं | ज्ञानैर्दूतं |
| 92 | 3 | गणशोच्यवन्ते | गणशोप्यवन्ति" |
| 93 | 11 | शोमितः | शोभिनः |
| ,, | 16 | क्षितु | क्षितुं |
| 97 | 16 | राक्षसान् | राक्षमाम् |
| 102 | 3 | रामेण | रामेण मातृदेवो |
| ,, | 4 | तरात्वेन | तरत्वेन |
| 104 | 5 | लब्ध्वाः | लब्धाः |
| 104 | 6 | ,रामो राम | राम राम |
| 106 | 3 | अत्रत्पि | अत्रापि |
| ,, | 22 | नद्रा देशावसरे | तदादेशावसरे |
| ,, | ,, | सर्गान्तं | सर्गान्ते |
| 107 | 3 | रलिंतं कृत्स्नं | चरितं कृत्स्नं |
| ,, | 15 | शृणोम्यहं | शृणोम्यहं |
| 108 | 18 | प्रथम | प्रथमं |
| 109 | 23 | रामलल्मन | रामलक्ष्मन |
| 111 | 5 | उल्लासो | उल्लासो |
| 113 | 1 | लोका | एषां लोका |
| ,, | 14 | शताणि च | शतानि च |
| ,, | ,, | वत्सस्य | वासस्य |
| 115 | 1 | संक्षेपपठितः | संक्षेपपठिता |